वधकर्माण उत्तरे धातवस्त्रयस्त्रिंशत् । तत्र वियात इत्येतद्वियातयत * इति वियातयेति वा ॥

आखण्डल प्र हूयसे ॥ ऋ० ८ । १७ । १२ ॥

आखण्डयितः खण्डं खण्डयतेः । तडिदित्यन्तिकवधयोः संसृष्टकर्म ताडयतीति सतः ॥ १० ॥ ४ ॥

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि । या नो दूरे तडितो या अरातयोऽभिसन्ति जम्भया ता अनप्नसः ॥ ऋ० २ । २३ । ९ ॥

त्वया वयं सुवर्द्धयित्रा ब्रह्मणस्पते स्पृहणीयानि वसूनि मनुष्येभ्य आददीमहि याश्च नो दूरे तलितो याश्चान्तिकेऽरातयोऽदानकर्माणो वा, दानप्रज्ञा वा जम्भय ता अनप्नसोऽप्न इति रूपनामाप्नोतीति सतः । विद्युत्तडिद्भवतीति शाकपूणिः सा ह्यवताडयति दूराच्च दृश्यतेऽपि त्विदमन्तिकनामैवाभिप्रेतं स्यात् ॥

दूरे चित्सन्तळिदिवाति रोचसे ॥ ऋ० १ । ९४ । ७ ॥
दूरेऽपि सन्नन्तिक इव सन्दृश्यस इति ॥

वज्रनामान्युत्तराण्यष्टादश । वज्रः कस्माद्वर्जयतीति सतस्तत्र कुत्स इत्येतत्कृन्ततेर्ऋषिः कुत्सो भवति कर्त्ता स्तोमानामित्यौपमन्यवोऽत्राप्यस्य वधकर्मैव भवति तत्सख इन्द्रः शुष्णं जघानेति ॥

ऐश्वर्यकर्माण उत्तरे धातवश्चत्वारः ॥

ईश्वरनामान्युत्तराणि चत्वारि । तत्रेन इत्येतत्सनित ऐश्वर्येणेति वा सनितमनेनैश्वर्यमिति वा ॥ ११ ॥ ५ ॥

* "वियातयिस" इति पुस्तकान्तरे । सं० ॥

यत्रा सुपर्णा अमृतस्य भागमनिमेषं विदथाभिस्वरन्ति ।
इनो विश्वस्य भुवनस्य गोपाः स मा धीरः पाकमत्रा विवेश ॥
ऋ० १ । १६४ । २१ ॥

यत्र सुपर्णाः सुपतना आदित्यरश्मयोऽमृतस्य भागमुदकस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषां भूतानां गोपायितादित्यः स मा धीरः पाकमत्राविवेशेति धीरो धीमान्पाकः पक्तव्यो भवति विपक्वप्रज्ञ आदित्य इत्युपनिषद्वर्णो * भवतीत्यधिदैवतम् । अथाध्यात्मं यत्र सुपर्णाः सुपतनानीन्द्रियाण्यमृतस्य भागं ज्ञानस्यानिमिषन्तो वेदनेनाभिस्वरन्तीति वाभिप्रयन्तीति वेश्वरः सर्वेषामिन्द्रियाणां गोपायितात्मा स मा धीरः पाकमत्राविवेशेति धीरो धीमान्पाकः पक्तव्यो भवति विपक्वप्रज्ञ आत्मेत्यात्मगतिमाचष्टे ॥ १२ ॥ ६ ॥

इति तृतीयाऽध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

बहुनामान्युत्तराणि द्वादश । बहु कस्मात्प्रभवतीति सतः ॥

ह्रस्वनामान्युत्तराण्येकादश । ह्रस्वो ह्रसतेः ॥

महन्नामान्युत्तराणि पञ्चविंशतिः । महान्कस्मान्मानेनान्याञ्जहातीति शाकपूणिर्मंहनीयो भवतीति वा । तत्र ववक्षिथ विवक्षस इत्येते वक्तेर्वा वहतेर्वा साऽभ्यासात् ॥

गृहनामान्युत्तराणि द्वाविंशतिः । गृहाः कस्माद् गृह्णन्तीति सताम् ॥

---

* मेधाप्राप्त्यर्थं वर्णनिमित्यर्थः ।

परिचरणकर्माण उत्तरे धातवो दश ॥

सुखनामान्युत्तराणि विंशतिः । सुखं कस्मात्सुहितं खेभ्यः खं पुनः खनतेः ॥

रूपनामान्युत्तराणि षोडश । रूपं रोचतेः ॥

प्रशस्यनामान्युत्तराणि दश ।

प्रज्ञानामान्युत्तराण्येकादश ॥

सत्यनामान्युत्तराणि षट् । सत्यं कस्मात्सत्सु तायते सत्प्रभवं भवतीति वा ॥

अष्टा उत्तराणि पदानि पश्यतीकर्माण उत्तरे धातवश्चायतिप्रभृतीनि च नामान्यामिश्राणि ।

नवोत्तराणि पदानि सर्वपदसमाम्नानाय ॥

अथात उपमाः । यदतत्तत्सदृशमिति गार्ग्यस्तदासां कर्म । ज्यायसा वा गुणेन प्रख्याततमेन वा कनीयांसं वा प्रख्यातं वोपमिमीतेऽथापि कनीयसा ज्यायांसम् ॥ १३ ॥ १ ॥

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ॥
ऋ० १० । ४ । ६ ॥

तनूत्यक्तनूत्यक्ता वनर्गू वनगामिनावग्निमन्थनौ बाहू तस्कराभ्यामुपमिमीते । तस्करस्तस्करो * भवति यत्पापकमिति नैरुक्तास्तनोतेर्वा स्यात्सन्ततकर्मा भवत्यहोरात्रकर्मा वा । रशनाभिर्दशभिरभ्यधीताम् । अभ्यधीतामित्यभ्यधाताम् । ज्यायांस्तत्र गुणोऽभिप्रेतः ॥ १४ ॥ २ ॥

---

* 'तत्करो भवति' इति पाठान्तरम् । सं० ॥

कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं न योषा कृणुते सधस्थ आ ॥
ऋ० १० । ४० । २ ॥

क्व स्विद्रात्रौ भवथः क्व दिवा क्वाभिप्राप्तिं कुरुथः क्व वसथः को वां शयने विधवेव देवरम् । देवरः कस्माद् द्वितीयो वर उच्यते । विधवा विधातृका भवति विधवनाद्वा विधावनाद्वेति चर्मशिरा अपि वा धव इति मनुष्यनाम तद्वियोगाद्विधवा । देवरो दीव्यतिकर्मा । मर्यो मनुष्यो मरणधर्मा । योषा यौतेराकुरुते सहस्थाने । अथ निपाताः पुरस्तादेव व्याख्याताः । यथेति कर्मोपमा ॥

यथा वातो यथा वनं यथा समुद्र एजति
ऋ० ५ । ७८ । ८ ॥

भ्राजन्तो अग्नयो यथा ॥ ऋ० १ । ५० । ३ ॥

आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥
ऋ० १० । ९७ । ११ ॥

आत्माऽततेर्वाप्तेर्वापि वात इव स्याद्यावद् व्याप्तिभूत इति ॥

अग्निर्न ये भ्राजसा रुक्मवक्षसः ॥ ऋ० १० । ७८ । २ ॥

अग्निरिव ये मरुतो भ्राजमाना रोचिष्णूरस्का भ्राजस्वन्तो रुक्मवक्षसः ॥ १५ ॥ ३ ॥

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ॥
ऋ० १ । ४१ । ९ ॥

चतुरोऽक्षान्धारयत इति तद्यथा कितवाद् बिभीयादेवमेव दुरुक्ताद् बिभीयान्न दुरुक्ताय स्पृहयेत् कदाचित् । आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातोऽथाप्युपमार्थे दृश्यते ॥

जार आ भगम् ॥ ऋ० १० । ११ । ६ ॥

जार इव भगमादित्योऽत्र जार उच्यते रात्रेर्जरयिता स एव भासाम् । तथापि निगमो भवति स्वसुर्जारः शृणोतु न इत्युषसमस्य स्वसारमाह साहचर्याद्रसहरणाद्वापि त्वयं मनुष्यजार एवाभिप्रेतः स्यात्स्त्रीभगस्तथा स्याद्भजतेः । मेष इति भूतोपमा ॥

मेषो भूतोऽभि यन्नयः ॥ ऋ० ८ । २ । ४० ॥

मेषो मिषतेस्तथा पशुः पश्यतेः । अग्निरिति रूपोपमा ॥

हिरण्यरूपः स हिरण्यसन्दृगपां नपात्सेदु हिरण्यवर्णः ॥ ऋ० २ । ३५ । १०

हिरण्यवर्णस्येवास्य रूपम् ॥ था इति च ।

तं प्रत्नथा पूर्वथा विश्वथेमथा ॥ ऋ० ५ । ४४ । १ ॥

प्रत्न इव पूर्व इव विश्व इवेम इवेत्ययमेततरोऽमुष्मादसावस्ततरोऽस्मादमुथायथासाविति व्याख्यातम् । वदिति सिद्धोपमा । ब्राह्मणवद्वृषलवत् । ब्राह्मणा इव वृषला इवेति । वृषलो वृषशीलो भवति वृषाशीलो वा ॥ ६ ॥ ४ ॥

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अंगिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम् ॥

ऋ० १ । ४५ । ३ ॥

प्रियमेधः प्रिया अस्य मेधा । यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम् । प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्रम् । अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहेऽङ्गारेष्वङ्गिरा ( अङ्गारा अङ्कना अञ्चना ) अत्रैव तृतीयमृच्छेतत्यूचुस्तस्मादत्रिर्न त्रय इति विखननाद्वैखानसो भरणाद्भारद्वाजो विरूपो नानारूपो महिव्रतो महाव्रत इति ॥ १७ ॥ ५ ॥

इति तृतीयाऽध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः ॥

अथ लुप्तोपमान्यर्थोपमानीत्याचक्षते सिंहो व्याघ्र इति पूजायां श्वा काक इति कुत्सायाम्। काक इति शब्दानुकृतिस्तदिदं शकुनिषु बहुलम्। न शब्दानुकृतिर्विद्यत इत्यौपमन्यवः। काकोऽपकालयितव्यो भवति। तित्तिरिस्तरणात्तिलमात्रचित्र इति वा। कपिञ्जलः कपिरिव जीर्णः कपिरिव जवत ईषत्पिङ्गलो वा कमनीयं शब्दं पिञ्जयतीति वा। श्वाशुयायी शवतेर्वा स्याद् गतिकर्मणः श्वसितेर्वा। सिंहः सहनाद्धिंसेर्वा स्याद्विपरीतस्य सम्पूर्वस्य वा हन्तेः संहाय हन्तीति वा। व्याघ्रो व्याघ्राणाद् व्यादाय हन्तीति वा॥ १८॥ १॥

अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत्॥

मेधाविनामान्युत्तराणि चतुर्विंशतिः। मेधावी कस्मान्मेधया तद्वान्भवति मेधा मतौ धीयते॥

स्तोतृनामान्युत्तराणि त्रयोदश। स्तोता स्तवनात्॥

यज्ञनामान्युत्तराणि पञ्चदश। यज्ञः कस्मात्प्रख्यातं यजतिकर्मेति नैरुक्ता याच्ञो भवतीति वा यजुरुन्नो भवतीति वा बहुकृष्णाजिन इत्यौपमन्यवो यजूंष्येनं नयन्तीति वा॥

ऋत्विङ्नामान्युत्तराण्यष्टौ। ऋत्विक् कस्मादीरण ऋग्यष्टा भवतीति शाकपूणिर्ऋतुयाजी भवतीति वा॥

याच्ञाकर्माण उत्तरे धातवः सप्तदश॥

दानकर्माण उत्तरे धातवो दश॥

अध्येषणकर्माण उत्तरे धातवश्चत्वारः॥

स्वपिति सस्तीति द्वौ स्वपितिकर्माणौ॥

कूपनामान्युत्तराणि चतुर्दश । कूपः कस्मात्कुपानं भवति कुप्यतेर्वा ॥

स्तेननामान्युत्तराणि चतुर्दशैव । स्तेनः कस्मात्संस्त्यानमस्मिन्पापकमिति नैरुक्ताः ॥

निर्णीतान्तर्हितनामधेयान्युत्तराणि षट् । निर्णीतं कस्मान्निर्णिक्तं भवति ॥

दूरनामान्युत्तराणि पञ्च । दूरं कस्माद् द्रुतं भवति दुरयं वा ॥

पुराणनामान्युत्तराणि षट् । पुराणं कस्मात्पुरा नवं भवति ।

नवनामान्युत्तराणि षडेव । नवं कस्मादानीतं भवति ॥ १६ ॥ २ ॥

द्विश उत्तराणि नामानि । प्रपित्वेऽभीक इत्यासन्नस्य प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते ॥

आपित्वे नः प्रपित्वे तूयमा गहि ॥ ऋ० ८ । ४ । ३ ॥

अभीके चिदुलोककृदित्यपि निगमौ भवतः ॥ दभ्रमर्भकमित्यप्यल्पस्य । दभ्रं दभ्नोतेः सुदम्भं भवत्यर्भकमवहृतं भवति ।

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ॥

ऋ० १ । १२६ । ७ ॥

नमो महद्भ्यो नमो अर्भकेभ्य इत्यपि निगमौ भवतः ॥ तिरः सत इति प्राप्तस्य तिरस्तीर्णं भवति सतः संसृतं भवति ।

तिरश्चिदर्यया परि वर्तिर्यातमदाभ्या ॥ ऋ० ५ । ७५ । ७ ॥

पात्रेव भिन्दन्त्सत एति रक्षस इत्यपि निगमौ भवतः ॥ त्वो नेम इत्यर्धस्य त्वोऽपततो नेमोऽपनीतः । अर्धो हरतेर्विपरीताद्धारयतेर्वा स्यादुद्धृतं भवत्यृध्नोतेर्वा स्यादृद्धतमो विभागः ।

पीयति त्वो अनु त्वो गृणाति ॥ ऋ० १ । १४७ । २ ॥

नेमे देवा नेमेऽसुरा इत्यपि निगमौ भवतः ॥ ऋक्षाः स्तृभिरिति नक्षत्राणाम् । नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणमृक्षा उदीर्णानीव ख्यायन्ते । स्तृभिः स्तीर्णानीव ख्यायन्ते ।

अमी य ऋक्षा निहितास उच्चा ॥ ऋ० १ । २४ । १० ॥

पश्यन्तो द्यामिव स्तृभिरित्यपि निगमौ भवतः ॥ वम्रीभिरुपजिह्विका इति सीमिकानां वम्र्यो वमनात्सीमिका स्यमनादुपजिह्विका उपजिघ्र्यः ।

वम्रीभिः पुत्रमग्रुवो अदानम् ॥ ऋ० ४ । १९ । ९ ॥

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति ॥

ऋ० ८ । १०२ । २१ ॥

इत्यपि निगमौ भवतः ॥ ऊर्दरं कृदरमित्यावपनस्योर्दरमुदीर्णं भवत्यूर्जं दीर्णं वा । तमूर्दरं न पृणता यवेनेत्यपि निगमो भवति । तमूर्दरमिव पूरयति यवेन । कृदरं कृतदरं भवति । समिद्धो अञ्जनकृदरं मतीनामित्यपि निगमो भवति ॥ २० ॥ ३ ॥

रम्भः पिनाकमिति दण्डस्य । रम्भ आरभन्त एनम् । आ त्वा रम्भं न जिव्रयो ररम्भेत्यपि निगमो भवत्यारभामहे त्वा जीर्णा इव दण्डम् । पिनाकं प्रतिपिनष्ट्येनेन । कृत्तिवासाः पिनाकहस्तोऽवततधन्वेत्यपि निगमो भवति । मेना ग्ना इति स्त्रीणां स्त्रियः स्त्यायतेरपत्रपणकर्मणो मेना मानयन्त्येना ग्ना गच्छन्त्येनाः ॥

अमेनाँश्चिज्जनिवतश्चकर्थ ॥ ऋ० ५ । ३१ । २ ॥

ग्नास्त्वाकृन्तन्नपसोऽतन्वत ( म० सं० १ । ६ । ४ ) इत्यपि निगमौ भवतः ॥ शेपो वैतस इति पुंस्प्रजननस्य शेपः शपतेः स्पृशतिकर्मणो वैतसो वितस्तं भवति ।

**यस्यामुशन्तः प्रहराम शेपम् ॥ ऋ० १० । ८५ । ३७ ॥**

त्रिः स्म माह्नः श्नथयो वैतसेन ( ऋ० १० । ९५ । ५ ) इत्यपि निगमौ भवतः ॥ अथैने इत्युपदेशस्य । अया ते अग्ने समिधा विधेम ( ऋ० ४ । ४ । १५ ) इति स्त्रियाः । एना वो अग्निम् ( ऋ० ७ । १६ । १ ) इति नपुंसकस्य । एना पत्या तन्वं संसृजस्व ( ऋ० १० । ८५ । २७ ) इति पुंसः । सिषक्तु सचत इति सेवमानस्य ।

**स नः सिसक्तु यस्तुरः ॥ ऋ० १ । १८ । २ ॥**

स नः सेवतां यस्तुरः ।

**सचस्वा नः स्वस्तये ॥ ऋ० १ । १ । ९ ।**

सेवस्व नः स्वस्तये । स्वस्तीत्यविनाशिनामास्तिरभिपूजितः स्वस्तीति । भ्यसते रेजत इति भयवेपनयोः ॥

**यस्य शुष्माद्रोदसी अभ्यसेताम् ॥ ऋ० २ । १२ । १ ॥**

रेजते अग्ने पृथिवी मखेभ्यः ( ऋ० ६ । ६६ । ९ ) इत्यपि निगमौ भवतः ॥ द्यावापृथिवीनामधेयान्युत्तराणि चतुर्विंशतिः । तयोरेषा भवति ॥ २१ ॥ ४ ॥

**कतरा पूर्वा कतरापरायोः कथा जाते कवयः को विवेद ।**
**विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥**
**ऋ० १ । १८५ । १ ॥**

कतरा पूर्वा कतरा परैनयोः कथं जाते कवयः क एने विजानाति सर्वमात्मना बिभृतो यद्धैनयोः कर्म विवर्तेते चैनयोरहनी अहोरात्रे चक्रयुक्ते इवेति द्यावापृथिव्योर्महिमानमाचष्टे ॥ २२ ॥ ५ ॥

इति तृतीयाध्यायस्य चतुर्थः पादः ॥

---

तृतीयाध्यायश्च समाप्तः ॥

---

ओ३म्

# अथ चतुर्थाध्यायारम्भः ॥

## तत्र प्रथमः पादः ॥

एकार्थमनेकशब्दमित्येतदुक्तम् । अथ यान्यनेकार्थान्येकशब्दानि तान्यतोऽनुक्रमिष्यामोऽनवगतसंस्कारांश्च निगमान् । तदैकपदिकमित्याचक्षते ॥

जहा जघानेत्यर्थः ॥ १ ॥

को नु म॒र्या अमि॑थितः सखा॒ सखा॑यमब्रवीत् ।
ज॒हा को अ॒स्मदी॑षते ॥ ऋ० ८ । ४५ । ३७ ॥

मर्या इति मनुष्यनाम मर्यादाभिधानं वा स्यात् । मर्यादा मर्यैरादीयते मर्यादा मर्यादिनोर्विभागः । मेथतिराक्रोशकर्मा । अपापकं जघान कमहं जातु कोऽस्मद्भीतेः पलायते । निधापाश्या भवति यन्निधीयते । पाश्या पाशसमूहः । पाशः पाशयतेर्विपाशनात् ॥२॥

वयः॑ सुप॒र्णा उप॑ सेदु॒रिन्द्रं॑ प्रि॒यमे॑धा॒ ऋष॑यो॒ नाध॑मानाः
अप॑ ध्वा॒न्तमू॑र्णु॒हि पू॒र्धि चक्षु॑र्मुमु॒ग्ध्य१॒॑स्मान्नि॒धये॑व ब॒द्धान् ॥
ऋ० १० । ७३ । ११ ॥

वयो वेर्बहुवचनं सुपर्णाः सुपतना आदित्यरश्मय उपसेदुरिन्द्रं याचमानाः । अपोर्णुह्याध्वस्तं चक्षुः । चक्षुः ख्यातेर्वा चष्टेर्वा । पूर्धि पूरय देहीति वा मुञ्चास्मान्पाशैरिव बद्धान् ॥ ३ ॥

पा॒र्श्वतः॑ श्रो॒णि॒तः शि॑ताम॒तः ॥ यजुः २१ । ४३ ॥

पार्श्वं पर्शुमयमङ्गं भवति । पर्शु स्पृशतेः संस्पृष्टा पृष्ठदेशम् । पृष्ठं स्पृशतेः संस्पृष्टमङ्गैः । अङ्गमङ्गनादञ्चनाद्वा । श्रोणिः श्रोणतेर्गतिचलाकर्मणः श्रोणिश्चलतीव गच्छतः दोः शिताम भवति दोर्द्रवतेः । योनिः शितामेति शाकपूणिर्विषितो

भवति । श्यामतो यकृत्त इति तैटीकिः । श्यामं श्यायतेः । यकृद्-
यथा कथा च कृत्यते । शितिमांसतो मेदस्त इति गालवः । शिति
श्यतेर्मांसं माननं वा मानसं वा मनोऽस्मिन्त्सीदतीति वा मेदो
मेद्यतेः ॥ ३ ॥

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ऋ० ५ । ३९ । १ ॥

यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति । यन्म इह नास्तीति वा त्रीणि मध्यमानि पदानि । त्वया नस्तद् दातव्यमद्रिवन् । अद्रिरादृणात्येनेनापि वात्तेः स्यात्ते सोमाद इति ह विज्ञायते । राध इति धननाम राध्नुवन्त्येनेन । तन्नस्त्वं वित्तधनोभाभ्यां हस्ताभ्यामाहर । उभौ समुब्धौ भवतः । दमूना दममना वा दानमना वा दान्तमना वापि वा दम इति गृहनाम तन्मनाः स्यान्मना मनोतेः ॥ ४ ॥

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा भोजनानि ॥
ऋ० ५ । ४ । ५ ॥

अतिथिरभ्यतितो गृहान्भवत्यभ्येति तिथिषु परकुलानीति वा परगृहाणीति वा दुरोण इति गृहनाम दुरवा भवन्ति दुस्तर्पाः । इमं नो यज्ञमुपयाहि विद्वान्त्सर्वा अग्ने अभियुजो विहत्य शत्रूयतामाभर भोजनानि । विहत्यान्येषां बलानि शत्रूणां भवनादाहर भोजनानीति वा धनानीति वा । मूषो मूषिका इत्यर्थः । मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव ॥ ५ ॥

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो ।
वित्तं मे अस्य रोदसी ॥ ऋ० १ । १०५ । ८ ॥

सन्तपन्ति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदन्ति । स्वाङ्गाभिधानं वा स्याच्छिश्नानि व्यदन्तीति । सन्तपन्ति माध्यः । कामाः स्तोतारं ते शतक्रतो ! वित्तं मे अस्य रोदसी । जानीतं मेऽस्य द्यावापृथिव्याविति । त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ । तत्र ब्रह्मेतिहासमिश्र-मृङ्मिश्रं गाथामिश्रं भवति । त्रितस्तीर्णतमो मेधया बभूवापि वा संख्यानामैवाभिप्रेतं स्यादेकतो द्वितस्त्रित इति त्रयो बभूवुः ॥ ६ ॥

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।
सोमराजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥
ऋ० ८ । ४८ । ७ ॥

ईषणेन वैषणेन वार्षणेन वा ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव धनस्य प्रवर्द्धय च न आयूंषि सोमराजन् ! अहानीव सूर्यो वासराणि । वासराणि वेसराणि विवासनानि गमनानीति वा । कुरुतनेत्यनर्थका उपजना भवन्ति कर्त्तन हन्तन यातनेति । जठरमुदरं भवति जग्धमस्मिन्ध्रियते धीयते वा ॥ ७ ॥

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥
ऋ० ३ । ४७ । १ ॥

मरुत्वानिन्द्र ! मरुद्भिस्तद्वान्वृषभो वर्षितापां रणाय रमणीयाय संग्रामाय पिब सोममनुष्वधमन्वन्नं मदाय मदनीयाय जैत्रायासिञ्चस्व जठरे मधुन ऊर्मिम् । मधु सोममित्यौपमिकं माद्यतेः । इदमपीतरन्मध्वेतस्मादेव । त्वं राजासि पूर्वेष्वप्यहस्सु सुतानाम् ॥ ८ ॥

इति चतुर्थाध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः ॥

तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा तिलमात्रतुन्नमिति वा ॥ ६ ॥ १ ॥

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ॥
ऋ० १० । ७१ । २ ॥

सक्तुमिव परिपवनेन पुनन्तः । सक्तुः सचतेर्दुर्धावो भवति कसतेर्वा स्याद्विपरीतस्य विकसितो भवति । यत्र धीरा मनसा वाचमकृषत प्रज्ञानं धीराः प्रज्ञानवन्तो ध्यानवन्तः । तत्र सखायः सख्यानि सञ्जानते । भद्रैषां लक्ष्मीर्निहिताधि वाचीति । भद्रं भगेन व्याख्यातं भजनीयं भूतानामभिद्रमणीयं भवद्रमयतीति वा भाजनवद्वा । लक्ष्मीर्लाभाद्वा लक्षणाद्वा लप्स्यनाद्वा * लाञ्छनाद्वा लषतेर्वा स्यात्प्रेप्साकर्मणो लग्यतेर्वा स्यादाश्लेषकर्मणो लज्जतेर्वा स्यादश्लाघाकर्मणः । शिप्रे इत्युपरिष्टाद् ( ६ । १७ ) व्याख्यास्यामः ॥ १० ॥ २ ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै ॥
ऋ० १ । ११५ । ४ ॥

तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासावयुंक्त हरणानादित्यरश्मीन्हरितोऽश्वानिति वाथ रात्री वासस्तनुते सिमस्मै वेसरमहरवयुवती सर्वस्मात् ।

* "लप्स्यनाद्वा" इति पाठः कचित्पुस्तके नास्ति ॥ सं० ॥

अपि वोपमार्थे स्याद्रात्रीव इति वासस्तनुत † इति । तथापि निगमो भवति ॥

पुनः समव्यद्विततं वयन्ती ॥ ऋ० २ । ३८ । ४ ॥

समनात्सीत् ॥ ११ ॥ ३ ॥

इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा ।

मन्दू समानवर्चसा ॥ ऋ० १ । ६ । ७ ॥

इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन । मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम् ॥ १२ ॥ ४ ॥

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः ।

हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥

ऋ० १ । १६३ । १० ॥

ईर्मान्ताः समीरितान्ताः सुसमीरितान्ताः पृथ्वन्ता वा । सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा । अपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति । इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिन्द्रियाणि भवन्ति । सं शूरणासो दिव्यासो अत्याः । शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः । हंसा इव श्रेणिशो यतन्ते । हंसा हन्ते-र्घ्नन्त्यध्वानम् । श्रेणिश इति श्रेणिः श्रयतेः समाश्रिता भवन्ति । यदाक्षिषुर्यदापन्दिव्यमज्ममजनिमाजिमश्वाः । अस्त्यादित्यस्तुति-रश्वस्यादित्यादश्वो निस्तष्ट इति । सूरादश्वं वसवो निरतष्ट ( ऋ० १ । १६३ । २ ) इत्यपि निगमो भवति ॥ १३ ॥ ५ ॥

† रात्री वासः इव तनुते" इत्यर्थः । सं० ॥

कायमानो वना त्वं यन्मातृरजगन्नपः न तत्ते अग्ने प्रमृषे निवर्त्तनं यद्दूरे सन्निहाभवः ॥ ऋ० ३ । ६ । २ ॥

कायमानश्चायमानः कामयमान इति वा । वनानि त्वं यन्मातृरपोऽगम उपशाम्यन् । न तत्ते अग्ने ! प्रमृष्यते निवर्त्तनं दूरे यत्सन्निह भवसि जायमानः ॥

लोधं नयन्ति पशु मन्यमानाः ॥ ऋ० ३ । ५३ । २३ ॥

लुब्धमृषिं नयन्ति पशुं मन्यमानाः ॥

शीरं पावकशोचिषम् ॥ ऋ० ८ । १०२ । ११ ॥

पावकदीप्तिम् । अनुशायिनमिति वाशिनमिति वा ॥ १४ ॥ ६ ॥

कनीनकेव विद्रधे नवे द्रुपदे अर्भके । बभ्रू यामेषु शोभेते ॥ ऋ० ४ । ३२ । २३ ॥

कनीनके कन्यके । कन्या कमनीया भवति । क्वेयं नेतव्येति वा कमनेनानीयत इति वा । कनतेर्वा स्यात्कान्तिकर्मणः । कन्ययोरधिष्ठानप्रवचनानि सप्तम्या एकवचनानीति शाकपूणिः । विद्धयोर्दारुपाद्योर्दारु दृणातेर्वा द्रूणातेर्वा तस्मादेव द्रु । नवे नवजाते अर्भके अवृद्धे । ते यथा तदधिष्ठानेषु शोभेते एवं बभ्रू यामेषु शोभेते । बभ्र्वोरश्वयोः संस्तवः । इदं च मेऽदादिदं च मेऽदादित्यृषिः प्रसङ्ख्यायाह ॥

सुवास्त्वा अधि तुग्वनि ॥ ऋ० ८ । १६ । ३७ ॥

सुवास्तुर्नदी । तुग्व तीर्थं भवति । तूर्णमेतदायन्ति ॥

कुविन्नंसन्ते मरुतः पुनर्नः ॥ ऋ० ७ । ५८ । ५ ॥

पुनर्नो नमन्ते मरुतः । नसत इत्युपरिष्टाद् ( ७ । १७ ) व्याख्यास्यामः ॥

ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं
चोदय दातवे मघम् ॥ ऋ० ६ । ७५ । ५ ॥

ये ते मदा आहननवन्तो वञ्चनवन्तस्तैरिन्द्रं चोदय दानाय मघम् ॥ १५ ॥ ७ ॥

उपो अदर्शि शुन्ध्युवो न वक्षो नोधाइवाविरकृत प्रियाणि ।
अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् ॥
ऋ० १ । १२४ । ४ ॥

उपादर्शि शुन्ध्युवः । शुन्ध्युरादित्यो भवति । शोधनात्तस्यैव वक्षो भासोऽध्यूढम् । इदमपीतरद्वक्ष एतस्मादेवाध्यूढं काये । शकुनिरपि शुन्ध्युरुच्यते । शोधनादेवोदकचरो भवति । आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव । नोधा ऋषिर्भवति । नवनं दधाति । स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते । अद्मसदद्मान्नं भवत्यद्मसादिनीति वान्नसानिनीति वा । ससतो बोधयन्ती शश्वत्तमागात्पुनरेयुषीणाम् । स्वपतो बोधयन्ती शाश्वतिकतमागात्पुनरागामिनीनाम् ॥

ते वाशीमन्त इष्मिणः ॥ ऋ० १ । ८७ । ६ ॥

ईषिणिन इति वैषणिन इति वार्षणिन इति वा । वाशीति वाङ्नाम । वाश्यत इति सत्याः ॥

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ॥
ऋ० ३ । ५३ । ३ ॥

अभिवहनस्तुतिमभिषवणप्रवादां स्तुतिं मन्यन्त ऐन्द्री त्वेव शस्यते । परितक्म्येत्युपरिष्टाद् ( ११ । २५ ) व्याख्यास्यामः ॥ १६ ॥ ८ ॥

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥

## अथ तृतीयः पादः ॥

सुविते सु इते सूते सुगते प्रजायामिति वा । सुविते मा धाः (मै० सं० १ । २ । ७) इत्यपि निगमो भवति । दयतिरनेककर्मा । नवेन पूर्वं दयमानाः स्याम (मै० सं० ४ । १३ । ८) इत्युपदयाकर्मा । य एक इद्विदयते वसु (ऋ० १ । ८४ । ७) इति दानकर्मा वा विभागकर्मा वा । दुर्वर्तुर्भीमो दयते वनानि (ऋ० ६ । ६ । ५) इति दहतिकर्मा । दुर्वर्तुर्दुर्वारः । विदद्वसुर्दयमानो वि शत्रून् (ऋ० ३ । ३४ । १) इति हिंसाकर्मा ॥

इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान् ।
अहं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत् ॥

दयमान इति । नूचिदिति निपातः पुराणनवयोः । नू चेति च ॥

अद्या चिन्नू चित्तदपो नदीनाम् ॥ ऋ० ६ । ३० । ३ ॥

अद्य च पुरा च तदेव कर्म नदीनाम् ॥

नू च पुरा च सदनं रयीणाम् ॥ ऋ० १ । ९६ । ७ ॥

अद्य च पुरा च सदनं रयीणाम् । रयिरिति धननाम । रातेर्दानकर्मणः ॥ १७ ॥ १ ॥

विद्याम तस्य ते वयमकूपारस्य दावने ॥ ऋ० ५ । ३९ । २ ॥

विद्याम तस्य ते वयमकुपरणस्य दानस्य । आदित्योऽप्यकूपारो उच्यतेऽकूपारो भवति दूरपारः । समुद्रोऽप्यकूपार उच्यतेऽकूपारो भवति महापारः । कच्छपोऽप्यकूपार उच्यतेऽकूपारो न कूपमृच्छतीति । कच्छपः कच्छं पाति । कच्छेन पातीति वा कच्छेन पिबतीति वा । कच्छः खच्छः खच्छदः । अयमपीतरो नदीकच्छ एतस्मादेव । कमुदकं तेन छाद्यते ॥

शिशीते शृङ्गे रक्षसे विनिक्षे ॥ ऋ० ५।२।६ ॥

निश्यति शृङ्गे रक्षसो विनिक्षणाय। रक्षो रक्षितव्यमस्माद्-रहसि क्षणोतीति वा। रात्रौ नक्षत इति वा ॥

अग्निः सुतुकः सुतुकेभिरश्वैः ॥ ऋ० १०।३।७॥

सुतुकनः सुतुकनैरिति वा। सुप्रजाः सुप्रजोभिरिति वा ॥

सुप्रायणा अस्मिन्यज्ञे वि श्रयन्ताम् ॥ यजु० २८।५ ॥

सुप्रगमनाः ॥ १८ ॥ २ ॥

देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥
ऋ० १।८६।१ ॥

देवा नो यथा सदा वर्धनाय स्युरप्रायुवोऽप्रमाद्यन्तो रक्षितारश्चाऽहन्यहनि। च्यवन ऋषिर्भवति च्यावयिता स्तोमानाम्। च्यवानमित्यप्यस्य निगमा भवन्ति ॥

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ॥
ऋ० १०।३९।४ ॥

युवां च्यवनं सनयं पुराणं यथा रथं पुनर्युवानं चरणाय ततक्षथुः। युवा प्रयौति कर्माणि। तक्षतिः करोतिकर्मा। रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते। असृगहनी रजसी उच्येते। रजांसि चित्रा वि चरन्ति तन्यवः (ऋ० ५।६३।५) इत्यपि निगमो भवति। हरो हरतेः। ज्योतिर्हर उच्यते। लोका हरांस्युच्यन्ते। असृगहनी हरसी उच्येते। प्रत्यग्ने हरसा हरः शृणीहि (१०।८७।२५) इत्यपि निगमो भवति ॥

जुह्वरे विचितयन्तः ॥ ऋ० ५ । १९ । २ ॥

जुह्विरे विचेतयमानाः । व्यन्त इत्येषोऽनेककर्मा । पदं देवस्य नमसा व्यन्तः ( ऋ० ६ । १ । ४ ) इति पश्यतिकर्मा । वीहि शूर पुरोळाशम् ( ऋ० ३ । ४१ । ३ ) इति खादतिकर्मा ॥

वीतं पातं पयस उस्रियायाः ॥ ऋ० १ । १५३ । ४ ॥

अश्नीतं पिबतं पयस उस्रियायाः । उस्रियेति गोनामोत्स्राविणोऽस्यां भोगाः । उस्रेति च ॥

त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः ।
गोभिः क्राणा अनूषत ॥

गोभिः कुर्वाणा अस्तोषत ॥

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताश्मन्मयीभिः ॥
ऋ० १० । १०१ । १० ॥

आसिञ्च हरिं द्रोरुपस्थे द्रुममयस्य । हरिः सोमो हरितवर्णः । अयमपीतरो हरिरेतस्मादेव । वाशीभिस्तक्षताश्मन्मयीभिः । वाशीभिरश्ममयीभिरिति वा । वाग्भिरिति वा ॥

स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥
ऋ० ७ । २१ । ५ ॥

स उत्सहतां यो विषुणस्य जन्तोर्विषमस्य । मा शिश्नदेवा अब्रह्मचर्याः । शिश्नं श्नथतेः । अपि गुर्ऋतं नः । सत्यं वा यज्ञं वा ॥ १९ ॥ ३ ॥

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥

ऋ० १० । १० । १० ॥

आगमिष्यन्ति तान्युत्तराणि युगानि यत्र जामयः करिष्यन्त्यजामिकर्माणि । जाम्यतिरेकनाम । बालिशस्य वाऽसमानजातीयस्य वोपजनः । उपधेहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातम् ॥ २० ॥ ४ ॥

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।
उत्तानयोश्चम्वोर्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात् ॥

ऋ० १ । १६४ । ३३ ॥

द्यौर्मे पिता । पाता वा पालयिता वा जनयिता । नाभिरत्र बन्धुर्मे माता पृथिवी महतीयम् । बन्धुः सम्बन्धनात् । नाभिः सन्नहनान्नाभ्या सन्नद्धा गर्भा जायन्त इत्याहुरेतस्मादेव ज्ञातीन्त्सनाभय इत्याचक्षते । सबन्धव इति च । ज्ञातिः सञ्ज्ञानात् । उत्तानयोश्चम्वोर्योनिरन्तः । उत्तान उत्तान ऊर्ध्वतानो वा । तत्र पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः । शंयुः सुखयुः ॥

अथा नः शं योररपो दधात ॥ ऋ० १० । १५ । ४ ॥

रपो रिप्रमिति पापनामनी भवतः । शमनं च रोगाणां यावनं च भयानाम् । अथापि शंयुर्बार्हस्पत्य उच्यते । तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ( तै० सं० २ । ६ । १० । २ ) इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये ॥ २१ ॥ ५ ॥

इति चतुर्थाध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः ॥

अदितिरदीना देवमाता ॥ २२ ॥ १ ॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥
ऋ० १ । ८९ । १० ॥

इत्यदितेर्विभूतिमाचष्टे एनान्यदीनानीति वा ॥

यमेरिरे भृगवः ॥ ऋ० १ । १४३ । ४ ॥

एरिर इतीर्तिरुपसृष्टोऽभ्यस्तः ॥ २३ । २ ॥

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥
ऋ० ४ । ३८ । ५ ॥

अपि स्मैनं वस्त्रमथिमिव वस्त्रमाथिनम् । वस्त्रं वस्तेः । तायुरिति स्तेननाम । संस्त्यानमस्मिन्पापकमिति नैरुक्तास्तस्यतेर्वा स्यात् । अनुक्रोशन्ति क्षितयः संग्रामेषु । भर इति संग्रामनाम । भरतेर्वा । हरतेर्वा । नीचायमानम् नीचैरयमानम् । नीचैर्निचितं भवत्युच्चैरुच्चितं भवति ॥

जस्तमिव श्येनम् । श्येनः शंसनीयं गच्छति । श्रवश्चाच्छा पशुमच्च यूथम् । श्रवश्चाऽपि पशुमच्च यूथम् । प्रशंसां च यूथं च । धनं च यूथं चेति वा । यूथं यौतेः । समायुतं भवति ।

इन्धान एनं जरते स्वाधीः ॥ ऋ० १० । ४५ । १ ॥

गृणाति । मन्दी मन्दतेः स्तुतिकर्मणः ॥

प्र मन्दिने पितुमदर्चता वचः ॥ ऋ० १ । १०१ । १ ॥

प्रार्चत मन्दिने पितुमद्वचः । गौर्व्याख्यातः (२ । ५-८) ॥ २४ ॥ ३ ॥

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥

ऋ० १ । ८४ । १५ ॥

अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपगतमपचितमपहितमन्तर्हितं वामुत्र चन्द्रमसो गृहे । गातुर्व्याख्यातः (४ । २१) । गातुं कृणवन्नुषसो जनाय (ऋ० ४ । ५१ । १) इत्यपि निगमो भवति । दंसयः कर्माणि । दंसयन्त्येनानि । कुत्साय मन्मन्नह्यश्च दंसयः (ऋ० १० । १३८ । १) इत्यपि निगमो भवति ॥

स तूताव नैनमश्नोत्यंहतिः ॥ ऋ० १ । ९४ । २ ॥

स तुताव । नैनमंहतिरश्नोति । अंहतिश्चांहश्चांहुश्च हन्तेर्निरूढोपधाद्विपरीतात् ॥

बृहस्पते चयस इत्पियारुम् ॥ ऋ० १ । १९० । ५ ॥

बृहस्पते यच्चातयसि देवपीयुम् । पीयतिर्हिंसाकर्मा । वियुते द्यावापृथिव्यौ वियवनात् ॥

समान्या वियुते दूरे अन्ते ॥ ऋ० ३ । ५४ । ७ ॥

समानं सम्मानमात्रं भवति । मात्रा मानात् । दूरं व्याख्यातम् (३ । १९) । अन्तोऽततेः । ऋधगिति पृथग्भावस्य प्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते ॥

ऋधगया ऋधगुताशमिष्ठाः ॥ यजुः ८ । २० ॥

ऋध्नुवन्नयाक्षीर्ऋध्नुवन्नशमिष्ठा इति च । अस्या इति चास्येति चोदात्तं प्रथमादेशेऽनुदात्तमन्वादेशे । तीव्रार्थतरमुदात्तमल्पीयोर्थतरमनुदात्तम् ॥

अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ

अजाश्व श्रवस्यतामजाश्व ॥ ऋ० १ । १३८ । ४ ॥

अस्मै नः सातय उपभवाहेळमानोऽक्रुध्यन्नरिवान्नातिरभ्यस्तो-ऽजाश्वेति पूषणमाहाजाश्व । अजा अजनाः । अथानुदात्तम् ॥

दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् ॥

ऋ० १० । ८५ । ३९ ॥

दीर्घायुरस्या यः पतिर्जीवतु स शरदः शतम् । शरच्छृता अस्यामोषधयो भवन्ति । शीर्णा आप इति वा । अस्येत्यस्या इत्येतेन व्याख्यातम् ॥ २५ ॥ ४ ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम् ॥

ऋ० १ । १६४ । १ ॥

अस्य वामस्य वननीयस्य । पलितस्य पालयितुर्होतुर्ह्वातव्यस्य । तस्य भ्राता मध्यमोऽस्त्यशनः । भ्राता भरतेर्हरतिकर्मणः । हरते भागं भर्तव्यो भवतीति वा । तृतीयो भ्राता घृतपृष्ठोऽस्यायमग्निः । तत्रापश्यं सर्वस्य पातारं वा पालयितारं वा विश्पतिम् । सप्तपुत्रं सप्तमपुत्रं सर्पणपुत्रमिति वा । सप्त सृता संख्या । सप्तादित्य-रश्मय इति वदन्ति ॥ २६ ॥ ३ ॥

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥

ऋ० १ । १६४ । २ ॥

सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम् । चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा । एकोऽश्वो वहति सप्तनामादित्यः । सप्तास्मै रश्मयो रसानभिसन्नामयन्ति । सप्तैनमृषयः स्तुवन्तीतिवा । इदम-पीतरं नामैतस्मादेवाभिसन्नामात् । संवत्सरप्रधान उत्तरोऽर्धर्चः । त्रिनाभि चक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति । संवत्सरः

संवसन्तेऽस्मिन् भूतानि । ग्रीष्मो ग्रस्यन्तेऽस्मिन्रसाः । वर्षा वर्षत्यासु पर्जन्यः । हेमन्तो हिमवान्हिमं पुनर्हन्तेर्वा । हिनोतेर्वा । अजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन् । यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते । तं संवत्सरं सर्वमात्राभिः स्तौति । पञ्चारे चक्रे परिवर्त्तमाने ( ऋ० १ । १६४ । १३ ) इति पञ्चर्तुतया । पञ्चर्तवः सम्वत्सरस्येति च ब्राह्मणं हेमन्तशिशिरयोः समासेन ( ऐ० ब्रा० १ । १ ) । षळर आहुरर्पितम् ( ऋ० १ । १६४ । १२ ) इति षडृतुतया । अराः प्रत्यृता नाभौ । षट् पुनः सहते ॥

द्वादशारं नहि तज्जराय ॥ ऋ० १ । १६४ । ११ ॥

द्वादश प्रधयश्चक्रमेकम् ॥ ऋ० १ । १६४ । ४८ ॥

इति मासानाम् । मासा मानात् । प्रधिः प्रहितो भवति ॥

तस्मिन्त्साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः ॥
ऋ० १ । १६४ । ४८ ॥

षष्टिश्च ह वै त्रीणि च शतानि सम्वत्सरस्याहोरात्रा ( गो० ब्रा० १ । ५ । ५ ) इति च ब्राह्मणं समासेन ॥

सप्त शतानि विंशतिश्च तस्थुः ॥ ऋ० १ । १६४ । ११ ॥

सप्त च वै शतानि विंशतिश्च सम्वत्सरस्याहोरात्रा ( ऐ० ब्रा० २ । १७ ) इति च ब्राह्मणं विभागेन विभागेन ॥ २७ ॥ ६ ॥

इति चतुर्थोऽध्यायस्य चतुर्थः पादः ॥

---

चतुर्थोऽध्यायश्च समाप्तः ॥

---

ओ३म्

# अथ पञ्चमाऽध्यायारम्भः ॥

## तत्र प्रथमः पादः ॥

सस्निमविन्दच्चरणे नदीनाम् ॥ ऋ० १० । १३९ । ६ ॥

संस्नातं मेघम् ॥

वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ॥

ऋ० ८ । २६ । १६ ॥

वोढृतमो ह्वानानां स्तोमो दूतो हुवन्नरौ । नरा मनुष्याः । नृत्यन्ति कर्मसु ।

दूतो जवतेर्वा द्रवतेर्वा वारयतेर्वा । दूतो देवानामसि मर्त्यानाम् (ऋ० १० । ४ । २) इत्यपि निगमो भवति । वावशानो वष्टेर्वा वाश्यतेर्वा । सप्तस्वसॄररुषीर्वावशानः (ऋ० १० । ५ । ५) इत्यपि निगमो भवति । वार्यं वृणोतेरथापि वरतमम् ॥

तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ॥ ऋ० ८ । २५ । १३ ॥

तद्वार्य्यं वृणीमहे वर्षिष्ठं गोपायितव्यम् । गोपायितारो यूयं स्थ । युष्मभ्यमिति वा । अन्ध इत्यन्ननाम । आध्यानीयं भवति ॥

आमत्रेभिः सिञ्चता मद्यमन्धः ॥ ऋ० २ । १४ । १ ॥

आसिञ्चतामत्रैर्मदनीयमन्धः । अमत्रं पात्रम् । अमा अस्मिन्नदन्ति । अमा पुनरनिर्मितं भवति । पात्रं पानात् । तमोऽप्यन्ध उच्यते । नास्मिन्ध्यानं भवति न दर्शनमन्धन्तम इत्यभिभाषन्ते । अयमपीतरोऽन्ध एतस्मादेव । पश्यदक्षण्वान्न वि चेतदन्धः (ऋ० १ । १६४ । १६) इत्यपि निगमो भवति ॥ १ ॥

असंश्चन्ती भूरिधारे पयस्वती ॥ ऋ० ६ । ७० । २ ॥

असज्यमाने इति वाऽव्युदस्यन्त्याविति वा । बहुधारे । उदकवत्यौ । वनुष्यतिर्हन्तिकर्मानवगतसंस्कारो भवति । वनुयाम वनुष्यतः ( ऋ० ८ । ४० । ७ ) इत्यपि निगमो भवति ॥

दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः ॥

ऋ० ७ । ८२ । १ ॥

दीर्घप्रततयज्ञमभिजिघांसति यो वयं तं जयेम पृतनासु । दूढ्यं दुर्धियं पापधियम् । पापः पातापेयानाम् । पापत्यमानोऽवाङेव पततीति वा । पापत्यतेर्वा स्यात् ॥

तरुष्यतिरप्येवंकर्मा । इन्द्रेण युजा तरुषेम वृत्रम् ( ऋ० ७ । ४८ । २ ) इत्यपि निगमो भवति ॥

मन्दना मन्दतेः स्तुतिकर्मणः । पुरुप्रियो मन्दते धामभिः कविः ( ऋ० ३ । ३ । ४ ) इत्यपि निगमो भवति । स मन्दना उदियर्ति प्रजावतीः ( ऋ० ९ । ८६ । ४१ ) इति च ॥

अन्येन मदाहनो याहि तूयम् ॥ ऋ० १० । १० । ८ ॥

अन्येन मदाहनो गच्छ क्षिप्रमाहंसीव भाषमाणेत्यसभ्यभाषणादाहना इव भवत्येतस्मादाहनः स्यात् । ऋषिर्नदो भवति । नदतेः स्तुतिकर्मणः ॥

नदस्य मा रुधतः काम आ गन् ॥ ऋ० १ । १७९ । ४ ॥

नदनस्य मा रुधतः काम आगमत्संरुद्धप्रजननस्य ब्रह्मचारिणः । इत्यृषिपुत्र्या विलपितं वेदयन्ते ॥ २ ॥

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः ॥

ऋ० १० । ८९ । ६ ॥

अश्नोतेरित्येके ॥

अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।

ऋ० ६ । १०७ । ६ ॥

लोपाशः सिंहं प्रत्यञ्चमत्साः ॥ ऋ० १० । २८ । ४ ॥

क्षियतिनिगमः पूर्वः क्षरतिनिगम उत्तर इत्येके । अनूपे गोमान्गोभिर्यदा क्षियत्यथ सोमो दुग्धाभ्यः क्षरति । सर्वे क्षियति निगमा इति शाकपूणिः ॥

श्वात्रमिति क्षिप्रनाम । आशु अतनं भवति ॥

स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः ॥

ऋ० १० । ८८ । ४ ॥

स पतत्रि चेत्वरं स्थावरं जङ्गमं च यत्तत्क्षिप्रमग्निरकरोज्जातवेदाः । ऊतिरवनात् । आ त्वा रथं यथोतये ( ऋ० ८ । ६८ । १ ) इत्यपि निगमो भवति । हासमाने इत्युपरिष्टात् ( ६ । ३६ ) व्याख्यास्यामः ॥

वम्रकः पड्भिरुपं सर्पदिन्द्रम् ॥ ऋ० १० । ९९ । १२ ॥

पानैरिति वा । स्पाशनैरिति वा । स्पर्शनैरिति वा ।

ससं न पक्कमविदच्छुचन्तम् ॥ ऋ० १० । ७९ । ३ ॥

स्वपनमेतन्माध्यमिकं ज्योतिरनित्यदर्शनम् । तदिवाविदज्ज्वलयमानम् ॥

द्विता च सत्ता स्वधया च शम्भुः ॥ ऋ० ३ । १७ । ५ ।

द्वैधं सत्ता मध्यमे च स्थान उत्तमे च । शम्भुः सुखभूः ॥

मृगं न व्रा मृगयन्ते ॥ ऋ० ८ । २ । ६ ॥

मृगमिव व्रात्याः प्रैषाः ॥ ३ ॥

वराहो मेघो भवति वराहारः। वरमाहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्वराहं तिरो अद्रिमस्ता ( ऋ० १। ६१। ७ ) इत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि। वरं वरं मूलं बृहतीति वा। वराहमिन्द्र एमुषम् ( ऋ० ८। ७७। १० )। इत्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते ॥

ब्रह्मणस्पतिर्वृषभिर्वराहैः ॥ ऋ० १०। ६७। ७ ॥

अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते ॥

पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ॥

ऋ० १। ८८। ५ ॥

स्वसराण्यहानि भवन्ति। स्वयं सारीण्यपि वा स्वरादित्यो भवति। स एनानि सारयति। उस्रा इव स्वसराणि ( ऋ० १। ३। ८ )। इत्यपि निगमो भवति। शर्य्या अङ्गुलयो भवन्ति। शर्या इषवः शरमय्यः। शरः शृणातेः। शर्याभिर्न भरमाणो गभस्त्योः ( ऋ० ६। ११०। ५ ) इत्यपि निगमो भवति ॥ अर्को देवो भवति। यदेनमर्चन्ति। अर्को मन्त्रो भवति। यदनेनार्चन्ति। अर्कमन्नं भवत्यर्चति भूतानि। अर्को वृक्षो भवति। स वृतः कटुकिम्ना ॥ ४ ॥

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।

ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥

ऋ० १। १०। १ ॥

गायन्ति त्वा गायत्रिणः। प्रार्चन्ति तेऽर्कमर्किणो ब्राह्मणास्त्वा शतक्रत उद्येमिरे वंशमिव। वंशो वनशयो भवति। वननाच्छ्रूयत इति वा। पवी रथनेमिर्भवति। यद्विपुनाति भूमिम् ॥

उत पव्या रथानामद्रिं भिन्दन्त्योजसा ॥

ऋ० ५। ५२। ६ ॥

तं मरुतः क्षुरपविना व्ययुरित्यपि निगमौ भवतः । वव्रो व्याख्यातम् ( ४ । १९ ) । धन्वान्तरिक्षं धन्वन्त्यस्मादापः । तिरोधन्वातिरोचते ( ऋ० १० । १८७ । २ ) इत्यपि निगमो भवति । सिनमन्नं भवति । सिनाति भूतानि । येन स्मा सिनं भरथः सखिभ्यः ( ऋ० ३ । ६२ । १ ) इत्यपि निगमो भवति । इत्थामुथेत्येतेन व्याख्यातम् । सचा सहेत्यर्थः ॥

वसुभिः सचाभुवा ॥ ऋ० ८ । ३५ । १ ॥

वसुभिः सहभुवौ । चिदिति निपातोऽनुदात्तः पुरस्तादेव व्याख्यातः । अथापि पशुनामेह भवत्युदात्तः ।

चिदसि मनासि ॥ यजु० ४ । १९ ॥

चितास्त्वयि भोगाश्चेतयस इति वा । आ इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः ( १ । ३ ) । अथाप्यध्यर्थे दृश्यते ॥

अभ्र आँ अपः ॥ ऋ० ५ । ४८ । १ ॥

अभ्रे आ अपः । अपोऽभ्रेऽधीति । द्युम्नं द्योततेर्यशो वान्नं वा ।

अस्मे द्युम्नमाधि रत्नं च धेहि ॥ ऋ० ७ । २५ । ३ ॥

अस्मासु द्युम्नं च रत्नं च धेहि ॥ ५ ॥

इति पञ्चमाऽध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः ॥

१ २ ३ २ ३ १ २ ३ १ २

पवित्रं पुनातेः । मन्त्रः पवित्रमुच्यते । येन देवाः पवित्रेणात्मानं
३२३ १ २
पुनते सदा ( सा० उ० ५ । २ । ८ । ५ ) इत्यपि निगमो भवति । रश्मयः पवित्रमुच्यन्ते । गभस्तिपूतो नृभिरद्रिभिः सुतः ( ऋ० ९ । ८६ । ३४ ) इत्यपि निगमो भवति । आपः पवित्रमुच्यन्ते ॥

शतपवित्राः स्वधया मदन्तीः ॥ ऋ० ७ । ४७ । ३ ॥

बहूदकाः । अग्निः पवित्रमुच्यते । वायुः पवित्रमुच्यते । सोमः पवित्रमुच्यते । सूर्यः पवित्रमुच्यते । इन्द्रः पवित्रमुच्यते ॥

अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः ।
पवित्रं ते मा पुनन्तु ॥ आप० श्रौ० १२ । १९ । ६ ॥

इत्यपि निगमो भवति । तोदस्तुद्यतेः ॥ ६ ॥ १ ॥

पुरु त्वा दाश्वान्वोचेऽरिरग्ने तव स्विदा ।
तोदस्येव शरण आ महस्य ॥ ऋ० १ । १५० । १ ॥

बहु दाश्वाँस्त्वामेवाभिह्वयाम्यरिरमित्र ऋच्छतेः । ईश्वरोऽप्यरिरेतस्मादेव । यदन्यदेवत्या अग्नावाहुतयो हूयन्त इत्येतद् दृष्ट्वैवमवक्ष्यत् । तोदस्येव शरण आ महस्य । तुदस्येव शरणेऽधिमहतः । स्वञ्चाः सु अञ्चनः । आजुह्वानो घृतपृष्ठः स्वञ्चाः ( ऋ० ५ । ३७ । १ ) इत्यपि निगमो भवति । शिपिविष्टो विष्णुरिति विष्णोर्द्वे नामनी भवतः । कुत्सितार्थीयं पूर्वं भवतीत्यौपमन्यवः ॥ ७ ॥ २ ॥

किमित्ते विष्णो परिचक्ष्यं भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥
ऋ० ७ । १०० । ६ ॥

किं ते विष्णोऽप्रख्यातमेतद्भवत्यप्रख्यापनीयं यन्नः प्रब्रूषे शेप इव निर्वेष्टितोऽसीत्यप्रतिपन्नरश्मिः । अपि वा । प्रशंसानामैवाभिप्रेतं स्यात् । किं ते विष्णो प्रख्यातमेतद्भवति प्रख्यापनीयं यदुत प्रब्रूषे शिपिविष्टोऽसीति । प्रतिपन्नरश्मिः । शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवति । मा वर्पो अस्मदप गूह एतत् । वर्प इति रूपनाम । वृणोतीति सतः । यदन्यरूपः समिथे सङ्ग्रामे भवसि । संयतरश्मिः । तस्योत्तरा भूयसे निर्वचनाय ॥ ८ ॥ ३ ॥

प्रतत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥
ऋ० ७ । १०० । ५ ॥

तत्तेऽद्य शिपिविष्ट नामार्यः प्रशंसामि । अर्योऽहमस्मीश्वरः स्तोमानाम् । अर्यस्त्वमसीति वा । तं त्वां स्तौमि तवसमतव्याँस्तवस इति महतो नामधेयमुदितो भवति । निवसन्तमस्य रजसः पराके पराक्रान्ते । आघृणिरागतहृणिः ॥

आघृणे सं सचावहै ॥ ऋ० ६ । ५५ । १ ॥

आगतहृणे संसेवावहै । पृथुज्रयाः पृथुजवः ॥

पृथुज्रया अमिनादायुर्दस्योः ॥ ऋ० ३ । ४९ । २ ॥

प्रामापयदायुर्दस्योः ॥ ९ ॥ ४ ॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम् ॥ ऋ० ७ । १ । १ ॥

दीधितयोऽङ्गुलयो भवन्ति । धीयन्ते कर्मसु । अरणी । प्रत्यृत एने अग्निः । समरणाज्जायत इति वा । हस्तच्युती हस्तप्रच्युत्या । जनयन्त प्रशस्तम् । दूरेदर्शनं गृहपतिमतनवन्तम् ॥ १० ॥ ५ ॥

एकया प्रतिधा पिबत् साकं सरांसि त्रिंशतम् ।
इन्द्रः सोमस्य काणुका ॥ ऋ० ८ । ७७ । ४ ॥

एकेन प्रतिधानेनापिबत्साकं सहेत्यर्थः । इन्द्रः सोमस्य काणुका कान्तकानीति वा । क्रान्तकानीति वा । कृतकानीति वा । इन्द्रः सोमस्य कान्त इति वा । कणेघात इति वा । कणेहतः कान्तिहतः । तत्रैतद्याज्ञिका वेदयन्ते । त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि । तान्येतस्मिन्काल एकेन प्रतिधानेन पिबन्ति । तान्यत्र सरांस्युच्यन्ते । त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्ताः । तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । तथापि निगमो भवति । यमक्षितिमक्षितयः पिबन्ति ( तै० सं० २ । ४ । १४ । १ ) इति । तं पूर्वपक्ष आप्याययन्ति । तथापि निगमो भवति । यथा देवा अंशुमाप्याययन्तीति । अध्रिगुर्मन्त्रो भवति । गव्यधिकृतत्वात् । अपि वा प्रशासनमेवाभिप्रेतं स्यात्तच्छब्दवत्त्वादध्रिगा शमीध्व सुशमि शमीध्वं शमीध्वमध्रिगाविति ( मै० सं० ४ । १३ । ४ ) अग्निरप्यध्रिगुरुच्यते ॥

तुभ्यं श्चोतन्त्यध्रिगो शचीवः ॥ ऋ० ३ । २१ । ४ ॥

अधृतगमन कर्मवन् । इन्द्रोऽप्यध्रिगुरुच्यते । अध्रिगव ओहमिन्द्राय ( ऋ० १ । ६१ । १ ) इत्यपि निगमो भवति । आङ्गूषः स्तोम आघोषः ॥

एनाङ्गूषेण वयमिन्द्रवन्तः ॥ ऋ० १ । १०५ । १९ ॥

अनेन स्तोमेन वयमिन्द्रवन्तः ॥ ११ ॥ ६ ॥

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥
ऋ० १० । ८९ । ५ ॥

आपातितमन्युस्तृप्रप्रहारी क्षिप्रप्रहारी सृप्रप्रहारी सोमो वेन्द्रो वा । धुनिर्धूनोतेः । शिमीति कर्मनाम । शमयतेर्वा शक्नोतेर्वा । ऋजीषी सोमः । यत्सोमस्य पूयमानस्यातिरिच्यते तदृजीषमपार्जितं भवति । तेनर्जीषी सोमः । अथाप्यैन्द्रो निगमो भवति । ऋजीषी वज्री (ऋ० ५ । ४० । ४) इति । हर्योरस्य स भागो धानाश्चेति । धाना भ्राष्ट्रे हिता भवन्ति । फले हिता भवन्तीति वा । बब्धां ते हरी धाना उप ऋजीषं जिघ्रतामित्यपि निगमो भवति । आदिनाभ्यासेनोपहितेनोपधामादत्ते बभस्तिरत्तिकर्मा । सोमः सर्वाण्यतसानि वनानि । नार्वागिन्द्रं प्रति मानानि दभ्नुवन्ति । यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्त्यर्वागेवैनमप्राप्य विनश्यन्तीति । इन्द्रप्रधानेत्येके । नैघण्टुकं सोमकर्मोभयप्रधानेत्यपरम् । श्मशा शु अश्नुत इति वा । श्माश्नुत इति वा ॥

अर्व श्मशा रुधद्वाः ॥ ऋ० १० । १०५ । १ ॥

अवारुधच्छ्मशा वारिति ॥ १२ ॥ ७ ॥

इति पञ्चमाऽध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

उर्वश्यप्सराः । उर्वभ्यश्नुत ऊरुभ्यामश्नुत ‡ उरुर्वा वशोऽस्याः । अप्सरा अप्सारिण्यपि वा । अप्स इति रूपनाम । अप्सातेरप्सानीयं भवति । आदर्शनीयं व्यापनीयं वा । स्पष्टं दर्शनायेति शाकपूणिः । यदप्स इत्यभक्षस्य अप्सो नाम । इति व्यापिनस्तद्रा भवति । रूपवती । तदनयात्तमिति वा । तदस्यै दत्तमिति वा । तस्या दर्शनान्मित्रावरुणयो रेतश्चस्कन्द । तदभिवादिन्येषर्ग्भवति ॥ १३ ॥ १ ॥

---

‡ 'उरुभ्यामश्नुत' इति पाठान्तरम् । सं० ॥

उतासि मैत्रावरुणो वसिष्ठोर्वश्यां ब्रह्मन्मनसोऽधि जातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥
ऋ० ७ । ३३ । ११ ॥

अप्यसि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन । द्रप्सः सम्भृतप्सानीयो भवति । सर्वे देवाः पुष्करे त्वा अधारयन्त । पुष्करमन्तरिक्षं पोषति भूतानि । उदकं पुष्करं पूजाकरं पूजयितव्यम् । इदमपीतरत्पुष्कर-मेतस्मादेव पुष्करं वपुष्करं वा । पुष्पं पुष्यतेः । वयुनं वेतेः कान्तिर्वा प्रज्ञा वा ॥ १४ ॥ २ ॥

स इत्तमोऽवयुनं ततन्वत्सूर्येण वयुनवच्चकार ॥
ऋ० ६ । २१ । ३ ॥

स तमोऽप्रज्ञानं ततन्वत् । स तं सूर्येण प्रज्ञानवच्चकार । वाज-पस्त्यं वाजपतनम् । सनेम वाजपस्त्यम् ( ऋ० ६ । ६८ । १२ ) इत्यपि निगमो भवति । वाजगन्ध्यं गध्यत्युत्तरपदम् । अश्याम वाजगन्ध्यम् ( ऋ० ६ । ६८ । १२ ) इत्यपि निगमो भवति । गध्यं गृह्णातेः । ऋज्रा वाजं न गध्यं युयूषन् ( ऋ० ४ । १६ । ११ ) इत्यपि निगमो भवति । गध्यतिर्मिश्रीभावकर्मा । आगधिता परिगधिता ( ऋ० १ । १२६ । ६ ) इत्यपि निगमो भवति । कौरयाणः कृतयानः । पाकस्थामा कौरयाणः ( ऋ० ८ । ३ । २१ ) इत्यपि निगमो भवति । तौरयाणस्तूर्णयानः ॥

स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः ॥

इत्यपि निगमो भवति । अह्रयाणोऽह्रीतयानः । अनष्टया कृणुह्यह्रयाण ( ऋ० ४ । ४ । १४ ) इत्यपि निगमो भवति । हर-याणो हरमाणयानः । रजतं हरयाणे ( ऋ० ८ । २५ । २२ ) इत्यपि निगमो भवति ॥

य आरितः कर्मणिकर्मणि स्थिरः ॥ ऋ० १ । १०१ । ४ ॥

प्रत्यृतः स्तोमान् । व्रन्दी व्रन्दतेर्मृदूभावकर्मणः ॥ १५ ॥ ३ ॥

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य
चिद् व्रन्दिनो रोरुवद्वना ॥ ऋ० १ । ५४ । ५ ॥

निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितू रोरूयमाणो वनानीति वा । वधेनेति वा । अव्रदन्त वीळिता ( ऋ० २ । २४ । ३ ) इत्यपि निगमो भवति । वीडयतिश्च व्रीडयतिश्च संस्तम्भकर्माणौ पूर्वेण सम्प्रयुज्येते । निष्षपी स्त्रीकामो भवति । विनिर्गतपसाः । पसः पसतेः स्पृशतिकर्मणः ॥

मा नो मघेव निष्षपी परा दाः ॥ ऋ० १ । १०४ । ५ ॥

स यथा धनानि विनाशयति मा नस्त्वं तथा परादाः । तूर्णाशमुदकं भवति । तूर्णमश्नुते । तूर्णाशं न गिरेरधि ( ऋ० ८ । ३२ । ४ ) इत्यपि निगमो भवति । क्षुम्पमहिच्छत्रकं भवति । यत्क्षुम्पते ॥ १६ ॥ ४ ॥

कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
कदा नः शुश्रवद् गिर इन्द्रो अङ्ग ॥
ऋ० १ । ८४ । ८ ॥

कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरिष्यति । कदा नः श्रोष्यति च गिर इन्द्रो अङ्ग । अङ्गेति क्षिप्रनाम । अञ्चितमेवाङ्कितं भवति । निचुम्पुणः सोमो निचान्तपृणो निचमनेन प्रीणाति ॥ १७ ॥ ५ ॥

पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये
अपां जग्मिर्निचुम्पुणः ॥ ऋ० ८ । ९३ । २२ ॥

पत्नीवन्तः सुता इमेऽद्भिः सोमाः कामयमाना यन्ति वीतये पानाय। अपां गन्ता निचुम्पुणः। समुद्रोऽपि निचुम्पुण उच्यते। निचमनेन पूर्यते। अवभृथोऽपि निचुम्पुण उच्यते। नीचैरस्मिन्क्वणन्ति। नीचैर्दधतीति वा। अवभृथ निचुम्पुण (य० ३। ४८) इत्यपि निगमो भवति। निचुम्पुण निचुङ्कुणोति च। पदिर्गन्तुर्भवति। यत्पद्यते ॥ १८ ॥ ६ ॥

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति ॥
ऋ० १ । १२५ । २ ॥

सुगुर्भवति सुहिरण्यः। स्वश्वो महच्चास्मै वय इन्द्रो दधाति। यस्त्वा यन्तमन्नेन प्रातरागामिन्नतिथे। मुक्षीजयेव पदिमुत्सिनाति। कुमारो मुक्षीजा मोचनाच्च सयनाच्च ततनाच्च। पादुः पद्यतेः।

आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥
ऋ० १० । २७ । २४ ॥

आविष्कुरुते भासमादित्यः। गूहते बुसम्। बुसमित्युदकनाम ब्रवीतेः शब्दकर्मणः। भ्रंशतेर्वा। यद्वर्षन्पातयत्युदकं रश्मिभिस्तत्प्रत्यादत्ते ॥ १९ ॥ ७ ॥

इति पञ्चमाऽध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः ॥

वृकश्चन्द्रमा भवति । विवृतज्योतिष्को वा । विकृतज्योतिष्को वा । विक्रान्तज्योतिष्को वा ॥ २० ॥ १ ॥

अरुणो मासकृद्वृकः पथा यन्तं ददर्श हि ।
उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ॥
ऋ० १ । १०५ । १८ ॥

अरुण आरोचनः । मासकृन्मासानां चाऽर्धमासानां च कर्ता भवति । चन्द्रमा वृकः । पथा यन्तं ददर्श नक्षत्रगणम् । अभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चन्द्रमाः । तक्ष्णुवन्निव पृष्ठरोगी । जानीतं मेऽस्य द्यावापृथिव्याविति । आदित्योऽपि वृक उच्यते यदा वृङ्क्ते ॥

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ॥
ऋ० १ । ११७ । १६ ॥

आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता । तामश्विनौ प्रमुमुचतुरित्याख्यानम् । श्वापि वृक उच्यते । विकर्तनात् ॥

वृकश्चिदस्य वारण उरामथिः ॥ ऋ० ८ । ६६ । ८ ॥

उरणमथिः । उरण ऊर्णावान्भवति । ऊर्णा पुनर्वृणोतेरूर्णोतेर्वा । वृद्धवाशिन्यपि वृकयुच्यते ॥

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ॥
ऋ० १ । ११६ । १६ ॥

इत्यपि निगमो भवति । जोषवाकमित्यविज्ञातनामधेयम् । जोषयितव्यं भवति ॥ २१ ॥ २ ॥

य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन ॥
ऋ० ६ । ५९ । ४ ॥

य इन्द्राग्नी सुतेषु वां सोमेषु स्तौति तस्याश्नीथः । अथ योऽयं जोषवाकं वदति विजञ्जपः प्रार्जितहोषिणौ न देवौ तस्याश्नीथः । कृत्तिः कृन्ततेः । यशो वान्नं वा ॥

महीव कृत्तिः शरणा त इन्द्र ॥ ऋ० ८ । ९० । ६ ॥

सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिवेति । इयमपीतरा कृत्तिरेतस्मादेव । सूत्रमय्युपमार्थे वा । कृत्तिं वसान आ चर पिनाकं बिभ्रदागहि ( य० १६ । ५१ ) इत्यपि निगमो भवति ॥

श्वघ्नी कितवो भवति । स्वं हन्ति । स्वं पुनराश्रितं भवति ॥

कृतं न श्वघ्नी वि चिनोति देवने ॥ ऋ० १० । ४३ । ५ ॥

कृतमिव श्वघ्नी विचिनोति देवने । कितवः किं तवास्तीति शब्दानुकृतिः । कृतवान्वाशीर्नामकः । सममिति परिग्रहार्थीयं सर्वनामानुदात्तम् ॥ २२ ॥ ३ ॥

मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः ।
ऊर्मिर्न नावमा वधीत् * ॥

मा नः सर्वस्य दुर्धियः पापधियः सर्वतो द्वेषसोंऽहतिरूर्मिरिव नावमावधीत् । ऊर्मिरूर्णोतेः । नौः प्रणोत्तव्या भवति । नमतेर्वा । तत्कथमनुदात्तप्रकृतिनाम स्यात् । दृष्टव्ययं तु भवति । उतो समस्मिन्ना शिशीहि नो वसो ( ऋ० ८ । २१ । ८ ) इति सप्तम्याम् । शिशीतिर्दानकर्मा । उरुष्या णो अघायतः समस्मात् ( ऋ० ५ २४ । ३ ) इति पञ्चम्याम् । उरुष्यती † रक्षाकर्मा । अथापि प्रथमाबहुवचने ॥

* ऋ० ८ । ७५ । ६ ॥ † उरुष्यति, इति पाठान्तरम् । सं० ॥

नर्मन्तामन्यके समे ॥ ऋ० ८ । ३९ । १-३-४-६ ॥

हविषां जारो अपां पिपर्ति पपुरिर्नरा ।

पिता कुटस्य चर्षणिः ॥ ऋ० १ । ४६ । ४ ॥

हविषापां जरयिता । पिपर्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा । पिता कृतस्य कर्मणश्चायितादित्यः । शम्ब इति वज्रनाम । शमयतेर्वा शातयतेर्वा । उग्रो यः शम्बः पुरुहूत तेन (ऋ० १० । ४२ । ७) इत्यपि निगमो भवति । केपयः कपूया भवन्ति । कपूयमिति पुनाति कर्मकुत्सितम् । दुष्पूयं भवति ॥ २४ ॥ ५ ॥

पृथक् प्रायन्प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा ।

न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ॥

ऋ० १० । ४४ । ६ ॥

पृथक् प्रायन् । पृथक् प्रथतेः । प्रथमा देवहूतयः । ये देवानाह्वयन्त । अकुर्वत श्रवणीयानि यशांसि दुरनुकराण्यन्यैः । येऽशक्नुवन्यज्ञियां नावमारोढुम् । अथ ये नाशक्नुवन्यज्ञियां नावमारोढुमीर्मैव ते न्यविशन्तेहैव ते न्यविशन्त । ऋणे हैव ते न्यविशन्तास्मिन्नेव लोक इति वा । ईर्म इति बहुनाम । समीरिततरो भवति ॥

एता विश्वा सवना तूतुमा कृषे स्वयं सूनो सहसो यानि दधिषे ॥

ऋ० १० । ५० । ६ ॥

एतानि सर्वाणि स्थानानि तूर्णमुपाकुरुषे स्वयं बलस्य पुत्र यानि धत्स्व । अंसत्रमंहसः त्राणम् । धनुर्वा कवचं वा । कवचं कु अञ्चितं भवति । काञ्चितं भवति । कायेऽञ्चितं भवतीति वा ॥ २५ ॥ ६ ॥

प्री॒णी॒ताश्वा॑न्हि॒तं ज॑याथ स्वस्ति॒वाहं॒ रथ॒मित्कृ॑णुध्वम् ।
द्रो॒णाहा॑वमव॒तमश्म॑चक्र॒मंस॑त्रकोशं सिञ्चता नृ॒पाणा॑म् ॥

ऋ० १० । १०१ । ७ ॥

प्रीणीताश्वान्त्सुहितं जयथ जयनं वो हितमस्तु । स्वस्तिवाहनं रथं कुरुध्वम् । द्रोणाहावं द्रोणं द्रुममयं भवति । आहाव आह्वानादावह आवहनात् । अवतोऽवातितो महान्भवत्यश्मचक्रमशनचक्रमसनचक्रमिति वा । अंसत्रकोशमंसत्राणि वः कोशस्थानीयानि सन्तु । कोशः कुष्णातेर्विकुषितो भवत्ययमपीतरः कोश एतस्मादेव । संचय आचितमात्रो महान्भवति । सिंचत । नृपाणं नरपाणम् । कूपकर्मणा संग्राममुपमिमीते । काकुदं तालित्याचक्षते । जिह्वा कोकुवा । सास्मिन्धीयते । जिह्वा कोकुवा । कोकूयमाना वर्णान्नुदतीति वा । कोकूयतेर्वा स्याच्छब्दकर्मणः । जिह्वा जोहुवा । तालु तरतेस्तीर्णतममङ्गं ‡ लततेर्वा स्याद्विपरीताद्यथा तलं लतेत्यविपर्ययः ॥ २६ ॥ ७ ॥

सु॒दे॒वो अ॑सि वरुण॒ यस्य॑ ते स॒प्त सिन्ध॑वः ।
अ॒नु॒क्षर॑न्ति का॒कुदं॑ सू॒र्म्यं॑ सुषि॒रामि॑व ॥

ऋ० ८ । ६९ । १२ ॥

सुदेवस्त्वं कल्याणदेवः कमनीयदेवो वा भवसि वरुण । यस्य ते सप्त सिन्धवः । सिन्धुः स्रवणात् । यस्य ते सप्त स्रोतांसि तानि ते काकुदमनुक्षरन्ति । सूर्मि कल्याणोर्मिः स्रोतः सुषिरमनु यथा । वीरिटं तैटीकिरन्तरिक्षमेवमाह पूर्वं वयतेः । उत्तरमिरतेः । वयांसीरन्त्यस्मिन्भांसि वा । तदेतस्यामृच्युदाहरन्त्यपि निगमो भवति ॥ २७ ॥ ८ ॥

‡ लततेर्वा स्याद् लम्बकर्मणो विपरीताद्" इति पुस्तकान्तरे पाठः । सं० ॥

भूतस्य जातः पतिरेको बभूव । स धारयति पृथिवीं च दिवं च । कस्मै देवाय हविषा विधेम इति व्याख्यातम् । विधतिः दानकर्मा ॥

सरस्वान् ( १५ ) व्याख्यातः ( निरु० ६ । २६ ) । तस्यैषा भवति ॥ २३ ॥ १० ॥

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेभिर्नोऽविता भव ॥

ऋ० ७ । ९६ । ५ ॥

इति सा निगदव्याख्याता ॥ २४ ॥ ११ ॥

इति चतुर्थोऽध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

विश्वकर्मा ( १६ ) सर्वस्य कर्त्ता । तस्यैषा भवति ॥ २५ ॥ १ ॥

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत सन्दृक् ।
तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः ॥

ऋ० १० । ८२ । २ ॥

विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च सन्द्रष्टा भूतानाम् । तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वा । अद्भिः सह सम्मोदन्ते । यत्रैतानि सप्तऋषीणानि * ज्योतींषि । तेभ्यः परः आदित्यः । तान्येतस्मिन्नेकं भवन्तीत्यधिदैवतम् । अथाध्यात्मम् । विश्वकर्मा विभूतमना व्याप्ता धाता च विधाता च परमश्च सन्दर्शयितेन्द्रियाणाम् । एषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा

---

* सप्तर्षयाणि । इति पाठा० ॥ सं० ॥

मतानि वा नतानि वा । अन्नेन सह सम्मोदन्ते । यत्रेमानि सप्त-ऋषीणानीन्द्रियाणि । एभ्यः परः आत्मा । तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे । तत्रेतिहासमाचक्षते–विश्वकर्मा भौवनः सर्वमेधे सर्वाणि भूतानि जुहवाञ्चकार । स आत्मानमप्यन्ततो जुहवाञ्चकार । तदभिवादिन्येषर्ग्भवति ।

य इमा विश्वा भुवनानि जुह्वत् ॥ ऋ० १० । ८१ । १ ॥

इति । तस्योत्तरा भूयसे निर्वचनाय ॥ २६ ॥ २ ॥

विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।
मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥

ऋ० १० । ८१ । ६ ॥

विश्वकर्म्मन् ! हविषा वर्धयमानः स्वयं यजस्व पृथिवीं च दिवं च । मुह्यन्त्वन्ये अभितो जनाः सपत्नाः । इहास्माकं मघवा सूरिरस्तु प्रज्ञाता ॥

तार्क्ष्यः ( १७ ) त्वष्ट्रा [ त्वष्टा ] व्याख्यातः ( निरु० ८ । १३-१४ ) । तीर्णेऽन्तरिक्षे क्षियति । तूर्णमर्थं रक्षति । अश्नोतेर्वा । तस्यैषा भवति ॥ २७ ॥ ३ ॥

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥

ऋ० १० । १७८ । १ ॥

तं भृशमन्नवन्तम् । जूतिर्गतिः । प्रीतिर्वा । देवजूतं देवगतम् । देवप्रीतं वा । सहस्वन्तम् । तारयितारं रथानाम् । अरिष्टनेमिम् । पृतनाजितम् । आशुं स्वस्तये तार्क्ष्यमिह ह्वयेमेति । कमन्यं मध्यमादेवमवक्ष्यत् । तस्यैषापरा भवति ॥ २८ ॥ ४ ॥

स॒द्याश्चि॒द्यः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इव॒ ज्योति॑षा॒पस्त॒तान॑ ।
स॒ह॒स्र॒साः श॑त॒सा अ॑स्य॒ रंहि॒र्न स्मा॑ वरन्ते युव॒तिं न शर्या॑म् ॥

ऋ० १० । १७८ । ३ ॥

सद्योऽपि यः शवसा बलेन तनोत्यपः सूर्य इव ज्योतिषा पञ्च मनुष्यजातानि । सहस्रसानिनी शतसानिन्यस्य सा गतिः । न स्मैनां वारयन्ति प्रयुवतीमिव शरमयीमिषुम् ॥

मन्युः ( १८ ) मन्यतेर्दीप्तिकर्मणः * । क्रोधकर्मणो वधकर्मणो वा । मन्युन्त्यस्मादिषवः † । तस्यैषा भवति ॥ २९ ॥ ५ ॥

त्वया॑ मन्यो स॒रथ॑मारु॒जन्तो॒ हर्ष॑माणासो॒ऽधृ॒षि॒ता म॑रुत्वः ।
ति॒ग्मेष॑व॒ आयु॑धा सं॒शिशा॑ना अ॒भि प्र य॑न्तु॒ नरो॑ अ॒ग्निरू॑पाः ॥

ऋ० १० । ८४ । १ ॥

त्वया मन्यो सरथमारुह्य रुजन्तो ‡ हर्षमाणासोऽधृषिता मरुत्वस्तिग्मेषव आयुधानि संशिश्यमाना अभिप्रयन्तु नरो + अग्निरूपा अग्निकर्माणः । सन्नद्धाः कवचिन इति वा ॥

दधिक्राः ( १९ ) व्याख्याताः ( निरु० २ । २७ ) । तस्यैषा भवति ॥ ३० ॥ ६ ॥

आ द॒धि॒क्राः शव॑सा॒ पञ्च॑ कृ॒ष्टीः सूर्य॑ इव॒ ज्योति॑षा॒पस्त॑तान ।
स॒ह॒स्र॒साः श॑त॒सा वा॒ज्यर्वा॑ पृ॒णक्तु॒ मध्वा॒ समि॒मा वचां॑सि ॥

ऋ० ४ । ३८ । १० ॥

* मन्युर्मन्यतेः कान्तिकर्मणः इति निरुक्तम् । इति सायणः अथर्व भाष्ये । ४ । ३१ । १ ॥ † मन्थन्त्यस्मात् । मन्युं त्वस्मात् । इति पाठान्तरे ॥
‡ सायणस्त्वेवं पठति स्वभाष्ये "यास्कस्त्वाह—सरथं समानं रथं आरुह्य रुजन्त इति" ॥ + नराः । इति पाठा० ॥ सं० ॥

आतनोति दधिक्राः शवसा बलेनापः सूर्य्य इव ज्योतिषा पञ्च मनुष्यजातानि । सहस्रसाः शतसा वाजी वेजनवानर्वैरणवान्*त्सम्पृणक्तु नो मधुनोदकेन वचनानीमानीति । मधु धमतेर्विपरीतस्य ॥

सविता (२०) सर्वस्य प्रसविता । तस्यैषा भवति ॥ ३१ ॥ ७ ॥

सविता यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥

ऋ० १० । १४९ । १ ॥

सविता यन्त्रैः पृथिवीमरमयत् । अनारम्भणे † ऽन्तरिक्षे सविता द्यामदृंहत् । अश्वमिवाधुक्षद्धुनिमन्तरिक्षे मेघम् । बद्धम् अतूर्ते बद्धम् अतूर्णे इति वा । अत्वरमाणे इति वा । सविता समुदितारमिति । कमन्यं मध्यमादेवमवक्ष्यत् ? आदित्योऽपि सवितोच्यते । तथा च हैरण्यस्तूपेस्तुतः । अर्चन्हिरण्यस्तूप-ऋषिरिदं सूक्तं प्रोवाच । तदभिवादिन्येषर्ग्भवति ॥ ३२ ॥ ८ ॥

हिरण्यस्तूपः सवितर्यथा त्वाऽऽङ्गिरसो जुह्वे वाजे अस्मिन् ।
एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ॥

ऋ० १० । १४९ । ५ ॥

हिरण्यस्तूपो हिरण्यमयः ‡ स्तूपः । हिरण्यमयः स्तूपोऽस्येति वा +। स्तूपः स्त्यायतेः । संघातः । सवितः ! यथा त्वाङ्गिरसो

---

* वाजी वेजनवान् । अर्वा ईरणवान् । इति स्पष्टम् ॥

† अनालम्भने अथवा अनालम्बने । इति पाठान्तरे ॥

‡ हिरण्यमय० इति वा । इति पाठा० ॥ अत्र कर्मधारयः समासः ॥

+ अत्र बहुव्रीहिः समासः ॥ सं० ॥

जुह्वे वाजेऽन्नेऽस्मिन्नेवं त्वार्चन्नवनाय वन्दमानः सोमस्येवांशुं प्रतिजागर्म्यहम् ॥

त्वष्टा (२१) व्याख्यातः ( निरु० ८ । १३ )। तस्यैषा भवति ॥ ३३ ॥ ९ ॥

दे॒वस्त्वष्टा॑ सवि॒ता वि॒श्वरू॑पः पु॒पोष॑ प्र॒जाः पु॑रु॒धा ज॑जान ।
इ॒मा च॒ विश्वा॒ भुव॑नान्यस्य म॒हद्दे॒वाना॑मसुर॒त्वमेक॑म् ॥
ऋ० ३ । ५५ । १९ ॥

देवस्त्वष्टा सविता सर्वरूपः पोषति प्रजा रसानुप्रदानेन। बहुधा चेमा जनयति । इमानि च सर्वाणि भूतान्युदकान्यस्य। महच्चास्मै देवानामसुरत्वमेकम् । प्रज्ञावत्वं वा । अनवत्वं * वा। अपि वा । असुः ( निघ० ३ । ९ । ६ ) इति प्रज्ञानाम । अस्यत्य-नर्थानस्ताश्चास्यामर्थाः † । असुरत्वमादिलुप्तम् ‡ ॥

वातः ( २२ ) वातीति सतः । तस्यैषा भवति ॥ ३४ ॥ १० ॥

वात॒ आ वा॑तु भेष॒जं श॒म्भु म॑यो॒भु नो॑ हृ॒दे ।
प्र ण॒ आयूं॑षि तारिषत् ॥ ऋ० १० । १८६ । १ ॥

वात आवातु भैषज्यानि शम्भु मयोभु च नो हृदयाय। प्रवर्धयतु च न आयुः ।

अग्निः ( २३ ) व्याख्यातः ( निरु० ७ । १४ ) तस्यैषा भवति ॥ ३५ ॥ ११ ॥

---

* अन्नवत्त्वम् । इति केचित् ॥

† अनर्थाः । इति पाठान्तरम् ॥

‡ 'वसुरत्वम् आदि लुप्तं वा । वातः०' । इति पाठा० ॥ सं० ॥

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे । मरुद्भिरग्न आ गहि ॥

ऋ० १ । १६ । १ ॥

तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे । सोऽग्ने मरुद्भिः सहागच्छेति । कमन्यं मध्यमादेवमवक्ष्यत् ? तस्यैषापरा भवति ॥ ३६ ॥ १२ ॥

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥

ऋ० १ । १६ । ६ ॥

अभिसृजामि त्वा पूर्वपीतये पूर्वपानाय सोम्यं मधु सोममयम् । सोऽग्ने मरुद्भिः सहागच्छेति ॥ ३७ ॥ १३ ॥

इति चतुर्थोऽध्यायस्य तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ॥

वेनः ( २४ ) वेनतेः कान्तिकर्मणः । तस्यैषा भवति ॥ ३८ ॥ १ ॥

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां संङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥

अयं वेनश्चोदयत्पृश्निगर्भाः प्राष्टवर्णगर्भा आप इति वा । ज्योतिर्जरायुर्ज्योतिरस्य जरायुस्थानीयं भवति । जरायु जरया गर्भस्य । जरया यूयत इति वा । इममपां च सङ्गमने * सूर्यस्य च शिशुमिव विप्रा मतिभी रिहन्ति । लिहन्ति ‡ । स्तुवन्ति ।

---

* सङ्गमे । इति पाठा० ॥ ‡ रिहन्ति लिहन्ति । इति पाठा० ॥ सं० ॥

वर्धयन्ति । पूजयन्तीति वा । शिशुः शंसनीयो भवति । शिशीतेर्वा स्याद् दानकर्मणः । चिरलब्धो गर्भो भवति ॥

असुनीतिः (२५) असून्नयति । तस्यैषा भवति ॥ ३९ ॥ २ ॥

असुनीते मनो अस्मासु धारय जीवातवे सु प्रतिरा न आयुः ।
रारन्धि नः सूर्यस्य सन्दृशि घृतेन त्वं तन्वं वर्धयस्व ॥
ऋ० १० । ५९ । ५ ॥

असुनीते ! मनोऽस्मासु धारय चिरं जीवनाय प्रवर्धय च न आयुः । रन्धय च नः सूर्यस्य सन्दर्शनाय । रध्यतिर्वशगमनेऽपि दृश्यते ।

मा रधाम द्विषते सोम राजन् ॥ ऋ० १० । १२८ । ५ ॥

इत्यपि निगमो भवति । घृतेन त्वमात्मानं तन्वं वर्धयस्व ॥

ऋतः (२६) व्याख्यातः (निरु० २ । २५) । तस्यैषा भवति ॥४० ॥३॥

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।
ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥
ऋ० ४ । २३ । ८ ॥

ऋतस्य हि शुरुधः * सन्ति पूर्वीः । ऋतस्य प्रज्ञा वर्जनीयानि हन्ति । ऋतस्य † श्लोको बधिरस्यापि कर्णावातृणत्ति । बधिरो

* शुरुधः । इति पदनाम (निघ० ४।३) याः शु सद्यो रुन्धन्ति ताः स्व सेनाः । इति ऋग्वेदभाष्ये श्रीमच्छ्वामि दयानन्दाभिप्रायम् ॥

† श्लोको वाक् । श्लोक इति वाङ्नाम (निघ० १ । ११) ॥ सं० ॥

द्धश्रोत्रः । कर्णौ बोधयन्दीप्यमानश्चायोरयनस्य मनुष्यस्य । ज्योतिषो वा । उदकस्य वा ॥

इन्दुः (२७) इन्धेरुनत्तेर्वा । तस्यैषा भवति ॥ ४१ ॥ ४ ॥

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति । स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम् । अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत् ॥
ऋ० १ । १२९ । ६ ॥

प्रब्रवीमि तद्भव्यायेन्दवे । हवनार्ह इव य इषवानन्नवानका-मवान्वा । मननानि च नो रेजयति । रक्षोहा च बलेन रेजयति । स्वयं सोऽस्मदभिनिन्दितारम् । वधैरजेत दुर्मतिम् । अवस्रवेदघ-शंसः । ततश्चावतरं क्षुद्रमिवावस्रवेत् । अभ्यासे भूयाँसमर्थं मन्यन्ते । यथाहो दर्शनीयाहो दर्शनीयेति * । तत्परुच्छेपस्य शीलम् । परुच्छेप ऋषिः । पर्ववच्छेपः । परुषि परुषि शेपोऽस्येति वा ॥

इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि । सूक्तभाञ्जि हविर्भाञ्जि । तेषामेतान्यहविर्भाञ्जि—वेनोऽसुनीतिर्ऋत इन्दुः ॥

प्रजापतिः ( २८ ) प्रजानां पाता वा पालयिता वा । तस्यैषा भवति ॥ ३९ ॥ २ ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम् ॥
ऋ० १० । १२१ । १० ॥

* यथा—अहो ! दर्शनीय, अहो ! दर्शनीय, इत्यभ्यासवचनमर्थवैशिष्ट्यार्थं तथैव "मन्म रेजति" "अवस्रवेत्" अत्राप्यभ्यासवचनमर्थवैशिष्ट्यार्थ-मर्थस्याकर्षणार्थञ्चास्तीत्याशयः ॥ सं० ॥

प्रजापते न हि त्वदेतान्यन्यः सर्वाणि जातानि तानि परिबभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु । वयं स्याम पतयो रयीणाम् । इत्याशिः ॥

अहिः ( २९ ) व्याख्यातः ( निरु० २ । १७ ) तस्यैषा भवति ॥ ४३ ॥ ६ ॥

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ॥

ऋ० ७ । ३४ । १६ ॥

अप्सुजमुक्थैरहिं गृणीषे बुध्ने नदीनां रजस्सूदकेषु षीदन्* । बुध्नमन्तरिक्षम् । बद्धा अस्मिन्धृता आप इति । वा । इदमपीतरद् बुध्नमेतस्मादेव । बद्धा अस्मिन्धृता प्राणा इति ।

[ अहिर्बुध्न्यः ] योऽहिः स बुध्न्यः ( ३० ) । बुध्नमन्तरिक्षं तन्निवासात् । तस्यैषा भवति ॥ ४४ ॥ ७ ॥

मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्रिधदृतायोः ॥

ऋ० ७ । ३४ । १७ ॥

मा च नोऽहिर्बुध्न्यो रेषणाय धात् । मा अस्य यज्ञोखा च स्रिधद् यज्ञकामस्य ॥

सुपर्णः ( ३१ ) व्याख्यातः ( निरु० ३ । १२ ) । तस्यैषा भवति ॥ ४५ ॥ ८ ॥

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसा पश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥

ऋ० १० । ११४ । ४ ॥

* सीदन् । इति पाठा० ॥ सं० ॥

एकः सुपर्णः । स समुद्रमाविशति । स इमानि सर्वाणि भूतान्यभिविपश्यति । तं पाकेन मनसाऽपश्यमन्तितः। इत्यृषेर्दृष्टार्थस्य प्रीतिर्भवत्याख्यानसंयुक्ता । तं माता रेढि * । वागेषा माध्यमिका । स उ मातरं रेढि ॥

पुरूरवाः ( ३२ ) बहुधा रोरूयते । तस्यैषा भवति ॥ ४६ ॥ ९ ॥

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः स्वगूर्ताः ।
महे यत्त्वा पुरूरवो रणायाऽवर्धयन्दस्युहत्याय देवाः ॥
ऋ० १० । ९५ । ७ ॥

समासतास्मिञ्जायमाने ग्नाः । गमनादापः । देवपत्न्यः वा । अपि चैनमवर्द्धयन्नद्यः । स्वगूर्ताः । स्वयंगामिन्यः । महते च यत्त्वा पुरूरवो रणाय रमणीयाय संग्रामायावर्धयन् । दस्युहत्याय च देवाः देवाः ॥ ४७ ॥ १० ॥

इति निरुक्तोत्तरषट्के चतुर्थाध्यायस्य चतुर्थः पादः ॥

---

समाप्तश्चायमध्यायः ॥

---

निरुक्ते दशमोऽध्यायश्च समाप्तः ॥

---

* रेह्लि, रेह्ळि, रेळ्हि । इति पाठान्तराणि ॥ सं० ॥

# अथ पञ्चमाऽध्यायारम्भः ॥

[ निरुक्त एकादशोऽध्यायः ]

## तत्र प्रथमः पादः ॥

---

श्येनः * ( निघ० ५ । ५ । १ ) व्याख्यातः ( निरु० ४ । २४ ) । तस्यैषा भवति ॥ १ ॥

आदाय श्येनो अभरत्सोमं सहस्रं सवाँ अयुतं च साकम् ।
अत्रा पुरन्धिरजहादरातीर्मदे सोमस्य मूरा अमूरः ॥
ऋ० ४ । ६२ । ७ ॥

आदाय श्येनोऽहरत्सोमं † सहस्रं सवानयुतं च सह । सहस्रं सहस्रसाव्यमभिप्रेत्य । तत्रायुतं सोमभक्षाः । तत्सम्बन्धेनायुतं दक्षिणा इति वा । तत्र ‡ पुरन्धिरजहादमित्रान् । अदानानिति वा । मदे सोमस्य मूरा अमूर इति । ऐन्द्रे च सूक्ते सोमपानेन च स्तुतः । तस्मादिन्द्रं मन्यन्ते ॥

---

* श्येनः इति पदनाम । श्यायति गच्छतीति श्येनः । पक्षिभेदो वा । इति उणादि २ । ४६ ॥ कोष व्याख्यायां महर्षि दयानन्दः ॥ "श्येन=औषधियों में रस को डालने वाली वायु" इति चन्द्रमणिः ।

† अपिबत् । इति पाठा० ॥ ‡ अत्र । इति पाठा० ॥ सं० ॥

ओषधिः सोमः (२) सुनोतेः । यदेनमभिषुण्वन्ति । बहुलमस्य नैघण्टुकं वृत्तम् । आश्चर्यमिव प्राधान्येन । तस्य पावमानीषु निदर्शनायोदाहरिष्यामः ॥ २ ॥

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥

ऋ० ६ । १ । १ ॥

इति सा निगदव्याख्याता । अथैषाऽपरा भवति चन्द्रमसो वा । एतस्य वा ॥ ३ ॥

सोमं मन्यते पपिवान्यत्संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥

ऋ० १० । ८५ । ३ ॥

सोमं मन्यते पपिवान्यत्सर्पिषन्त्योषधिमिति वृथासुतमसोममाह । सोमं यं ब्रह्माणो विदुरिति न तस्याश्नाति कश्चनायज्वा—इत्यधियज्ञम् । अथाधिदैवतम्—सोमं मन्यते पपिवान्यत्संपिषन्त्योषधिमिति यजुः सुतमसोममाह । सोमं यं ब्रह्माणं विदुश्चन्द्रमसं न तस्याश्नाति कश्चन अदेव इति । अथैषापरा भवति चन्द्रमसो वा । एतस्य वा ॥ ४ ॥

यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः ।
वायुः सोमस्य रक्षिता समानां मास आकृतिः ॥

ऋ० १० । ८५ । ५ ॥

यत्त्वा देव प्रपिबन्ति तत आप्यायसे पुनरिति नाराशंसानभिप्रेत्य । पूर्वपक्षापरपक्षाविति वा । वायुः सोमस्य रक्षिता ।

वायुमस्य रक्षितारमाह । साहचर्याद्रसहरणाद्वा । समानां संवत्सराणां मास आकृतिः सोमो रूपविशेषैरोषधिः । चन्द्रमाः वा ।

चन्द्रमाः (३) चायन् द्रमति । चन्द्रो माता । चान्द्रं मानमस्येति वा । चन्द्रश्चन्दतेः कान्तिकमर्मणः । चन्दनमित्यप्यस्य भवति । चारु द्रमति । चिरं द्रमति । चमेर्वा पूर्वम् । चारु रुचेर्विपरीतस्य । तस्यैषा भवति ॥ ५ ॥

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन्प्र चन्द्रमास्तिरते दीर्घमायुः ॥
ऋ० १० । ८५ । १९ ॥

"नवोनवो भवति जायमानः" इति पूर्वपक्षादिमभिप्रेत्य । "अह्नां केतुरुषसामेत्यग्रम्" इति अपरपक्षान्तमभिप्रेत्य । आदित्यदैवतो द्वितीयः पाद इत्येके । "भागं देवेभ्यो विदधात्यायन्" इति अर्धमासेज्यामभिप्रेत्य । प्रवर्धयते चन्द्रमा दीर्घमायुः ॥

मृत्युः (४) मारयतीति सतः । मृतं च्यावयतीति वा शतबलाक्षो मौद्गल्यः । तस्यैषा भवति ॥ ६ ॥

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥
ऋ० १० । १८ । १ ॥

परं मृत्यो ध्रुवं मृत्यो ध्रुवं परेहि मृत्यो । कथितं तेन मृत्यो । मृतं च्यावयते । भवति मृत्यो । मदेर्वा मुदेर्वा । तेषामेषा भवति ॥७॥

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुं रसनामुरुष्यथः ॥
ऋ० १ । १५५ । २

इति सा निगदव्याख्याता ॥

विश्वानरः (५) व्याख्यातः (निरु० ७ । २१)। तस्यैषा भवति ॥ ८ ॥

प्र वो॑ म॒हे मन्द॑माना॒यान्ध॑सो॒ऽर्चा॑ वि॒श्वान॑राय विश्वा॒भुवे॑ ।
इन्द्र॑स्य॒ यस्य॒ सुम॑खं॒ सहो॒ महि॒ श्रवो॑ नृ॒म्णं च॒ रोद॑सी सप॒र्यतः॑ ॥

ऋ० १० । ५० । १ ॥

प्रार्चत यूयं स्तुतिं महते । अन्धसोऽन्नस्य दात्रे । मन्दमानाय मोदमानाय । स्तूयमानाय शब्दायमानायेति वा । विश्वानराय सर्वं विभूताय । इन्द्रस्य यस्य प्रीतौ सुमहद् बलं महच्च श्रवणीयं यशो नृम्णं च बलम् । नृम्णं नतम् । द्यावापृथिव्यौ वः परिचरत इति । कमन्यं मध्यमादेवमवक्ष्यत् ? तस्यैषापरा भवति ॥ ९ ॥

उदु॒ ज्योति॑र॒मृतं॑ वि॒श्वज॑न्यं वि॒श्वान॑रः सवि॒ता दे॒वो अ॑श्रेत् ॥

ऋ० ७ । ७६ । १ ॥

उदशिश्रिय * ज्ज्योतिरमृतं सर्वजन्यं विश्वानरः सविता देव इति ॥

धाता (६) सर्वस्य विधाता तस्यैषा भवति ॥ १० ॥

धा॒ता द॑दातु * दा॒शुषे॒ प्राचीं॑ जी॒वातु॒मक्षि॑ताम् ।
व॒यं दे॒वस्य॑ धीमहि सुम॒तिं स॒त्यध॑र्मणः ‡ ॥

अथ० ७ । १७ । २ ॥ मै० सं ४ । १२ । ६ ॥

---

* उदशिश्रयत् । इति पाठा० ॥

† दधातु । ‡ विश्वराधसः । इति अथर्व संहितायाम् ॥ सं० ॥

धाता ददातु * दत्तवते प्रवृद्धां जीविकामनुपक्षीणाम् †। वयं देवस्य धीमहि सुमतिं कल्याणीं मतिं सत्यधर्मणः ॥

विधाता (७) धात्रा व्याख्यातः (निरु० ११ । १०)। तस्यैष निपातो भवति बहुदेवतायामृचि ॥ ११ ॥

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि ।
तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम् ॥
ऋ० १० । १६७ । ३ ॥

इत्येताभिर्देवताभिरभिप्रसूतः सोमकलशानभक्षयमिति । कलशः कस्मात्? कला अस्मिञ्छेरते मात्राः । कलिश्च कलाश्च किरतेर्विकीर्णमात्राः ‡ ॥ १२ ॥

इति पञ्चमाऽध्यायस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पादः ॥

## अथातो मध्यस्थाना देवगणाः ॥

तेषां मरुतः प्रथमगामिनो + भवन्ति ।

मरुतः (८) मितराविणो वा । मितरोचिनो वा । महद्द्रवन्तीति × वा । तेषामेषा भवति ॥ १३ ॥ १ ॥

---

* ददाति । इति पाठा० ॥ † अक्षीणाम् । इति पाठा० ॥
‡ विकीर्णाः मात्राः । इति पाठा० ॥ + प्रथमागामिनो इति पाठा० ॥
× महद्द्रवन्तीति वा । इति पाठा० ॥ सं० ॥

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ॥
ऋ० १ । ८८ । १ ॥

विद्युन्मद्भिर्मरुतः स्वर्कैः स्वञ्चनैरिति वा । स्वर्चनैरिति वा । स्वर्चिभिरिति वा । रथैरायात । ऋष्टिमद्भिः । अश्वपर्णैः अश्वपतनैः । वर्षिष्ठेन च नोऽन्नेन वय इवापतत । सुमायाः कल्याणकर्माणो वा । कल्याणप्रज्ञा वा ॥

रुद्राः (९) व्याख्याताः (निरु० १०। ५) । तेषामेषा भवति ॥ १४ ॥ २ ॥

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।
इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥
ऋ० ५ । ५७ । १ ॥

आगच्छत रुद्रा इन्द्रेण सहजोषणाः सुविताय कर्मणे । इयं वोऽस्मदपि प्रतिकामयते मतिः । तृष्णज इव दिवा उत्सा उदन्यवे [इति] । तृष्णक्तृष्यतेः । उदन्युरुदन्यतेः ॥

ऋभवः (१०) उरु भान्तीति वा । ऋतेन भान्तीति वा । तेषामेषा भवति ॥ १५ ॥ ३ ॥

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः ॥
ऋ० १ । ११० । ४ ॥

कृत्वा कर्माणि * क्षिप्रत्वेन वोढारो मेधाविनो † वा। मर्त्तासः सन्तोऽमृतत्वमानशिरे। सौधन्वना ‡ ऋभवः + सूरख्याना वा सूरप्रज्ञा वा। संवत्सरे समपृच्यन्त धीतिभिः कर्मभिः। 'ऋभुर्विभ्वा वाजः, इति × सुधन्वनः आङ्गिरसस्य त्रयः पुत्रा बभूवुः। तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति। न मध्यमेन। तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति। आदित्यरश्मयोऽप्यृभव ╪ उच्यन्ते॥

अगो॑ह्यस्य॒ यद॑स॑स्तना गृ॒हे तद॒द्येदमृ॑भवो॒ नानु॑ गच्छथ ॥
ऋ० १। १६१। ११॥

अगोह्य आदित्योऽगूहनीयः। तस्य यदस्वपथ गृहे। यावत्तत्र भवथ। न तावदिह भवथेति॥

अङ्गिरसः (११) व्याख्याताः (निरु० ३। १७)। तेषामेषा भवति॥ १६॥ ४॥

---

* (विष्ट्वी) व्यापनशीलानि (शमी) कर्माणि कृत्वा इत्यर्थः। वि ष्ट्वी, शमीत्येतद् द्वयं कर्मनाम (निघ० २। १)॥

† (वाघतः) वाग्विद्यायुक्ताः मेधाविनः इत्यर्थः॥

‡ (सौधन्वनाः) शोभनविज्ञानाः इत्यर्थः॥

+ (ऋभवः) सत्यव्यवहार प्रकाशितप्रज्ञाः मेधाविनः इत्यर्थः। ऋभुः मेधावि नाम (निघ० ३। १५)॥

× 'ऋभुर्विभ्वा वाजः' इत्येतानि क्रमेण वैश्य-क्षत्रिय-ब्राह्मण वाचकानीति चन्द्रमणिविद्यालङ्कारमहोदयस्य मतम्॥

╪ (ऋभवः) पदनामसु च (निघ० ५। ५)॥ सं०॥

विरूपास इदृषयस्त इद्गम्भीरवेपसः ।
ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥ ऋ० १० । ६२ । ५ ॥

बहुरूपा ऋषयस्ते गम्भीरकर्माणो वा गम्भीरप्रज्ञा वा । तेऽङ्गिरसः पुत्राः । तेऽग्नेरधिजज्ञिरे । इत्यग्निजन्म ॥

पितरः ( १२ ) व्याख्याताः ( निरु० ४ । २१ ) । तेषामेषा भवति ॥ १७ ॥ ५ ॥

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥
ऋ० १० । १५ । १ ॥ यजु० १९ । ४९ ॥

उदीरतामवरे, उदीरतां परे, उदीरतां मध्यमाः पितरः सोम्याः सोमसम्पादिनः ते । असुं ये प्राणमन्वीयुरवृका अनमित्राः । सत्यज्ञा वा यज्ञज्ञा वा । ते न आगच्छन्तु पितरो ह्वानेषु । माध्यमिको यम इत्याहुः । * तन्माध्यमिकान्पितॄन्मन्यन्ते ॥

अङ्गिरसो व्याख्याताः (निरु० ३ । १७) । पितरो व्याख्याताः ( निरु० ४ । २१ ) । भृगवो व्याख्याताः ( निरु० ३ । १७ ) ।

अथर्वाणः ( १३ ) अथनवन्तः ‡ । थर्वतिश्चरतिकर्मा तत्प्रतिषेधः । तेषामेषा साधारणा भवति ॥ १८ ॥ ६ ॥

---

* तस्मात माध्यमिकान्० । इति पाठान्तरम् ॥
‡ अथर्ववन्तः । इति पाठा० ॥ सं० ॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥
ऋ० १० । १४ । ६ ॥ यजुः—१९ । ५० ॥

अङ्गिरसो नः पितरो नवगतयो नवनीतगतयो वा । अथर्वाणो भृगवः ( १४ ) सोम्याः सोमसम्पादिनः । तेषां वयं सुमतौ कल्याण्यां मतौ यज्ञियानाम् । अपि चैषां भद्रे भन्दनीये भाजनवति वा कल्याणे मनसि स्यामेति * । माध्यमिको देवगण इति नैरुक्ताः । पितर इत्याख्यानम् । अथाप्यृषयः स्तूयन्ते ॥ १९ ॥७॥

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः ।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥
ऋ० ७ । ३३ । ८ ॥

इति यथा ॥

* भगवता दयानन्दसरस्वतीस्वामिना स्वयजुर्वेदभाष्येऽयं मन्त्रः एवं व्याख्यातः—पितृसन्तानैरितरेतरं कथं वर्तितव्यमित्याह:—"हे मनुष्याः ! ये,नः=अस्माकम्,अङ्गिरसः=सर्वसिद्धान्तविदः, नवग्वाः=नव्यस्य नव्यस्य ज्ञानस्योपदेष्टारः, अथर्वाणः=अहिंसकाः, भृगवः=परिपक्वविज्ञानाः,"[भ्रृज्जति तपसा शरीरमिति भृगुर्ऋषिः प्रतापी वा,"इत्युक्तं उणादिकोषव्याख्यायाम् ( १ । २८ ) ]; सोम्यासः=ये सोममैश्वर्यमर्हन्ति ते, पितरः=पालकाः, [ सन्ति ], तेषां यज्ञियानां=ये यज्ञमर्हन्ति तेषाम्, सुमतौ=शोभना चासौ मतिश्च तस्याम् भद्रे=कल्याणकरे, सौमनसे=शोभनं मनः सुमनस्तस्यभावे, वयं प्रवृत्तास्स्यामैवं यूयमपि भवत ॥"
यजुः—१९ । ५० ॥ सं० ॥

आप्त्याः ( १५ ) आप्नोतेः । तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥ ८ ॥

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम् ।
आ दर्षते शवसा सप्त दानून्प्र साक्षते प्रतिमानानि भूरि ॥
ऋ० १० । १२० । ६ ॥

स्तोतव्यं बहुरूपमुरुभूतमीश्वरतममाप्तव्यानाम् । आदृणाति यः शवसा बलेन सप्त दातॄनिति वा । सप्त दानवानितिवा । प्रसाक्षते प्रतिमानानि बहूनि । साक्षतिराप्नोतिकर्मा ॥ २१ ॥ ९ ॥

इति पञ्चमाऽध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

### अथातो मध्यस्थानाः स्त्रियः ॥

तासामदितिः प्रथमागामिनी भवति ।

अदितिः ( १६ ) व्याख्याता ( निरु० ४ । २२ ) । तस्या एषा भवति ॥ २२ ॥ १ ॥

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि ।
अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥
ऋ० १० । ६४ । ५ ॥

दक्षस्य वाऽदिते ! जन्मनि व्रते कर्मणि राजानौ मित्रावरुणौ परिचरसि । विवासतिः परिचर्य्यायाम् ।

हविष्मां आविवासति ॥ ऋ० १ । १२ । ६ ॥

इति । आशास्तेर्वा । अतूर्तपन्था अत्वरमाणपन्थाः । बहुरथोऽर्यमादित्यः । अरीन्नियच्छति । सप्तहोता । सप्तास्मै रश्मयो रसानभिसन्नामयन्ति । सप्तैनमृषयः स्तुवन्तीति वा । विषमरूपेषु जन्मसु कर्मसूदयेषु । आदित्यो दक्ष इत्याहुः । आदित्यमध्ये च स्तुतः । अदितिर्दाक्षायणी ।

अदितेर्दक्षो अजायत दक्षाद्वदितिः परि ॥

ऋ० १० । ७२ । ४ ॥

इति च * । तत्कथमुपपद्येत ? समानजन्मानौ स्यातामिति । अपि वा । देवधर्मेणेतरेतरजन्मानौ स्याताम् । इतरेतरप्रकृती । अग्निरप्यदितिरुच्यते । तस्यैषा भवति ॥ २३ ॥ २ ॥

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥

ऋ० १ । ६४ । १५ ॥

यस्मै त्वं सुद्रविणो ददास्यनागास्त्वमनपराधत्वमदिते सर्वासु कर्मततिषु । आग † आङ्पूर्वाद् गमेः । एन एतेः ‡ । किल्विषं

* 'च' इति नास्ति केषुचित्पुस्तकेषु ॥

† इण आगोऽपराधे च । उणा० ४ । २१२ ॥ आग =( आगच्छति दुःखमनेनेति आगः ) ईयते प्राप्यते ज्ञायते वा तत् आगोऽपराधो दण्डो वा ॥

‡ इण आगसि । उणा० ४ । १९८ ॥ एनः=ईयते प्राप्यते दुःखमनेन तदेनः । पापं वा । अत्राऽसुन् प्रत्ययः नुडागमश्च ॥ सं० ॥

किल्बिदम् । सुकृतकर्मणो भयम् । कीर्तिमस्य भिनत्तीति वा । यं भद्रेण शवसा बलेन चोदयसि । प्रजावता च राधसा धनेन । ते वयमिह स्यामेति ।

सरमा ( १७ ) सरणात् । तस्या एषा भवति ॥ २४ ॥ ३ ॥

किमिच्छन्तीं सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः ।
कास्मेहितिः का परितक्म्यासीत्कथं रसाया अतरः पयांसि ॥
ऋ० १० । १०८ । १ ॥

किमिच्छन्ती सरमेदं * प्रानट् । दूरे ह्यध्वा । जगुरिः † जङ्गम्यतेः । पराञ्चनैः अचितः । का तेऽस्मास्वर्थहितिरासीत् ? किं परितकनम् ? परितक्म्या रात्रिः । परित एनां तक्म । तक्मेत्युष्णनाम । तकत इति सतः । कथं रसाया अतरः पयांसीति । रसा नदी । रसतेः शब्दकर्मणः । कथं रसानि तान्युदकानीति वा । देवशुनीन्द्रेण ‡ प्रहिता पणिभिरसुरैः समूद इत्याख्यानम् ॥

सरस्वती ( १८ ) व्याख्याता ( निरु० ९ । २६ ) । तस्या एषा भवति ॥ २५ ॥ ४ ॥

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥
ऋ० १ । ३ । १० ॥

* "वाग् वै सरमा" । इति ब्राह्मणे ॥

† अत्र यङ् लुगन्ताद् 'गम्' धातोरुरिन् प्रत्ययः (उणा० २।७३) प्राप्त्यर्थे ॥

‡ श्वयति गच्छति वर्द्धतेऽसौ श्वा । स्त्रियां ङीष्, शुनी=वाणी—देवशुनी—देववाणी । सरमा=देवशुनी, वेदवाणीत्यर्थः ॥ सं० ॥

पावका नः सरस्वत्यन्नैरन्नवती । यज्ञं वष्टु । धियावसुः कर्मवसुः । तस्या एषाऽपरा भवति ॥ २६ ॥ ५ ॥

म॒हो अर्णः॒ सर॑स्वती॒ प्र चे॑तयति के॒तुना॑ । धियो॒ विश्वा॒ वि रा॑जति ॥

ऋ० १ । ३ । १२ ॥

महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति । केतुना कर्मणा प्रज्ञया वा । इमानि च सर्वाणि प्रज्ञानान्यभिविराजति । वागर्थेषु विधीयते । तस्मान्माध्यमिकां वाचं मन्यन्ते ॥

वाक् ( १९ ) व्याख्याता ( निरु० २ । २३ ) । तस्या एषा भवति ॥ २७ ॥ ६ ॥

यद्वाग्वद॑न्त्यविचेत॒नानि॒ राष्ट्री॑ दे॒वानां॑ निष॒साद॑ म॒न्द्रा ।
चत॑स्र॒ ऊर्जं॑ दुदुहे॒ पयां॑सि॒ क्व॑ स्विदस्याः पर॒मं ज॑गाम ॥

ऋ० ८ । १०० । १० ॥

यद्वाग्वदन्त्यविचेतनानि । अविज्ञातानि । राष्ट्री देवानां निषसाद मन्द्रा । मन्दना । चतस्रोऽनुदिश ऊर्जं दुदुहे पयांसि । क्व स्विदस्याः परमं जगामेति । यत्पृथिवीं गच्छतीति वा । यदादित्यरश्मयो हरन्तीति वा । तस्या एषाऽपरा भवति ॥२८॥७॥

दे॒वीं वाच॑मजनयन्त दे॒वास्तां वि॒श्वरू॑पाः प॒शवो॑ वदन्ति ।
सा नो॑ म॒न्द्रेष॒मूर्जं॒ दुहा॑ना धे॒नुर्वाग॒स्मानुप॒ सुष्टु॒तैतु॑ ॥

ऋ० ८ । १०० । ११ ॥

देवीं वाचमजनयन्त देवाः । तां सर्वरूपाः पशवो वदन्ति । व्यक्तवाचश्चाव्यक्तवाचश्च । सा नो मदनाऽन्नं च रसं च दुहाना धेनुर्वागस्मानुपैतु सुष्टुता ॥

अनुमती राकेति देवपत्न्याविति नैरुक्ताः । पौर्णमास्याविति याज्ञिकाः । "या पूर्वा पौर्णमासी सानुमतिः। या उत्तरा सा राका" (मैत्रा० सं० ४ । ३ । ५ ॥ ऐ० ब्रा० ३२ । ६ ) इति विज्ञायते ॥

अनुमतिः (२० ) अनुमननात् । तस्या एषा भवति ॥ २९ ॥ ८॥

अन्विदनुमते * त्वं मन्यासै शं च नस्कृधि ।

क्रत्वे † दक्षाय ‡ नो हिनु + प्र ण आयूंषि तारिषः ॥

यजुः—३४ । ८ ॥

अनुमन्यस्वानुमते त्वम् । सुखं च नः कुरु । अन्नं च नोऽपत्याय धेहि । प्रवर्धय च न आयुः ॥

राका( २१ )रातेर्दानकर्मणः । तस्या एषा भवति ॥ ३० ॥ ९ ॥

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।

सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥

ऋ० २ । ३२ । ४ ॥

राकामहं सुह्वानां × सुष्टुत्याह्वये । शृणोतु नः सुभगा । बोधत्वात्मना । सीव्यत्वपः । प्रजननकर्म । सूच्याऽच्छिद्यमानया । सूची सीव्यतेः । ददातु वीरं शतप्रदम् । उक्थ्यं वक्तव्यप्रशंसम् ॥

---

* अनु-इत्-अनुमते इति पदच्छेदः । अत्र 'इत्' एवार्थे पदपूरणार्थे वा ॥

† अत्र क्रतु शब्दः अपत्यार्थे । यः क्रियते यया करोति वेति क्रतुः ॥

‡ "दक्षाय=अन्नम्" इत्यर्थः । अत्र "दक्ष" शब्दोऽन्नवाची विभक्तिव्यत्ययश्च ॥

+ हिनु=धेहीत्यर्थः। इषं तोकाय नो दधः ॥इति काठके॥ का० सं० १३।१६॥

× स्वाह्वानां । इति पाठा० ॥ सं० ॥

सिनीवाली कुहूरिति देवपत्न्याविति नैरुक्ताः। अमावास्ये इति याज्ञिकाः। "या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूः" ॥ (मै० सं० ४। ३। ५॥ ऐ० ब्रा० ३२। १०)॥

इति विज्ञायते ॥

सिनीवाली * (२२)। सिनमन्नं भवति। सिनाति भूतानि। वालं पर्वः। वृणोतेः। तस्मिन्नन्नवती। वालिनी वा। † वालेनैवास्यामणुत्वाच्चन्द्रमाः सेवितव्यो ‡ भवतीति वा। तस्या एषा भवति ॥ ३१ ॥ १० ॥

सिनीवालि पृथुष्टुके या देवानामसि स्वसा।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥

ऋ० २। ३२। ६॥ यजुः—३४। १०॥

सिनीवालि पृथुजघने। स्तुकः स्त्यायतेः। सङ्घातः। पृथुकेशस्तुके+पृथुस्तुके वा। या त्वं देवानामसि स्वसा। स्वसा सु असा। स्वेषु सीदतीति वा। जुषस्व हव्यमदनं × प्रजां च देवि दिश ० नः ॥

* सिनी प्रशस्तान्नवती वाले उत्सवे या सा सिनीवाली। इति चन्द्रमणिः ॥ सिनी प्रेमबद्धा चासौ बलकारिणी च तत्सम्बुद्धौ। इति ऋषि दयानन्दः यजुर्वेद भाष्ये ॥

† वालेनेवा०। इति पाठा० ॥ ‡ सेतव्यः। इति पाठा० ॥ + पृथुर्विस्तीर्णा ष्टुका स्तुतिः केशभारः कामो वा यस्य तत्सम्बुद्धौ। इति भगवद्दयानन्दः ॥

× हव्यमाहुतम्। इति पाठा० ॥ ० दिदिड्ढि=दिश=देहि। अत्र दिश धातोर्बहुलं छन्दसीति शपः श्लुः ॥ इति भगवद्दयानन्दः यजुर्वेदभाष्ये ॥ सं०॥

कुहूः ( २३ ) गूहतेः । क्वा भूदिति वा । क्व सती हूयत इति वा । क्वाहुतं हविर्जुहोतीति वा । तस्या एषा भवति ॥ ३२ ॥ ११ ॥

कुहूमहं सुवृतं * विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥
मै० सं० ४ । १२ । ६ ॥

कुहूमहं सुवृतं विदितकर्माणमस्मिन्यज्ञे सुह्वानामाह्वये । सा नो ददातु श्रवणं पितृणाम् । पित्र्यं धनमिति वा । पित्र्यं यश इति वा । तस्यै ते देवि ! हविषा विधेमेति व्याख्यातम् ।

यमी ( २४ ) व्याख्याता ( निरु० १० । १९ ) । तस्या एषा भवति ॥ ३३ ॥ १२ ॥

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥
ऋ० १० । १० । १४ ॥

अन्यमेव हि त्वं यमी । अन्यस्त्वांपरिष्वङ्क्ष्यते † । लिबुजेव वृक्षम् । तस्य वा त्वं मन इच्छ । स वा तव । अथ अनेन कुरुष्व संविदम् । सुभद्रां कल्याणभद्राम् । यमी यमं चकमे । तां ‡ प्रत्याचचक्ष + । इत्याख्यानम् ॥ ३४ ॥ १३ ॥

इति पञ्चमाध्यायस्य तृतीयः पादः ॥

---

* सुकृतं । इति पाठा० ॥ † परिष्वजताम् । इति पाठा० ॥
‡ यमः ताम् । इति पाठा० ॥ + प्रत्याचचक्षे । इति पाठा० ॥सं०॥

## अथ चतुर्थः पादः ॥

उर्वशी ( २५ ) व्याख्याता ( निरु० ५ । १३ ) । तस्या एषा भवति ॥ ३५ ॥ १ ॥

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्ठो * अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥

ऋ० १० । ९५ । १० ॥

विद्युदिव या पतन्त्यद्योतत हरन्ती मे अप्या काम्यानि । उदकान्यन्तरिक्षलोकस्य । यदा नूनमयं जायेताद्भ्योऽध्यप इति । नर्यो मनुष्यो नृभ्यो हितः । नरापत्यमिति वा । सुजातः सुजाततरः । अथोर्वशी प्रवर्धयते दीर्घमायुः ॥

पृथिवी ( २६ ) व्याख्याता ( निरु० १ । १३ ) । तस्या एषा भवति ॥ ३६ ॥ २ ॥

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि = ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥

ऋ० ५ । ८४ । १ ॥

सत्यं † त्वं पर्वतानां मेघानां खेदनम्–छेदनं–भेदनं बलमुत्र ‡ धारयसि पृथिवि ! प्रजिन्वसि या भूमिम् । प्रवणवति ! महत्त्वेन । महतीति । उदकवतीति वा ॥

इन्द्राणी ( २७ ) इन्द्रस्य पत्नी । तस्या एषा भवति ॥ ३७ ॥ ३ ॥

---

* जनिष्टो । इति पाठः ऋग्वेदे वर्त्तते ॥ = अत्र पृथिवी विद्युद्वाचिकेति चन्द्रमणिः ॥ † ( बट् ) सत्यम् । बळिति सत्यनाम(निघ० ३ । १०) ॥ ‡ छेदनं बलमुत्र । इति पाठा० ॥ सं० ॥

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।
नह्यस्या अपरं चन जरसा मरते पतिर्विश्वस्मादिन्द्र उत्तरः ॥

ऋ० १० । ८६ । ११ ॥

इन्द्राणीमासु नारिषु * सुभगामहमशृणवम् । नह्यस्या अपरामपि समां जरया म्रियते पतिः । सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमः । तस्या एषापरा भवति ॥ ३८ ॥ ४ ॥

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ॥

ऋ० १० । ८६ । १२ ॥

नाहमिन्द्राणि ! रमे सख्युर्वृषाकपेर्ऋते । यस्येदमप्यं हविः । अप्सु शृतम् । अद्भिः संस्कृतमिति वा । प्रियं देवेषु निगच्छति । सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूमः ॥

गौरीः ( २८ ) रोचतेर्ज्वलतिकर्मणः । अयमपीतरो गौरो वर्ण एतस्मादेव । प्रशस्यो भवति । तस्या एषा भवति ॥ ३९ ॥५॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥

ऋ० १ । १६४ । ४१ ॥

गौरीर्निर्मिमाय । सलिलानि तक्षती कुर्वती । एकपदी मध्यमेन । द्विपदी मध्यमेन चादित्येन च । चतुष्पदी दिग्भिः

* नारीषु । इति पाठः केषुचित् निरुक्तपुस्तकेषु ॥ सं० ॥

अष्टापदी दिग्भिश्चावान्तरदिग्भिश्च । नवपदी दिग्भिश्चावान्तरदिग्भिश्चादित्येन च । सहस्राक्षरा बहूदका । परमे व्यवने । तस्या एषाऽपरा भवति ॥ ४० ॥ ६ ॥

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः ।
ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥ ऋ० १ । १६४ । ४२ ॥

तस्याः समुद्रा अधिविक्षरन्ति । वर्षन्ति मेघाः । तेन जीवन्ति दिगाश्रयाणि भूतानि । ततः क्षरत्यक्षरमुदकम् । तत्सर्वाणि भूतान्युपजीवन्ति ॥

गौः ( २६ ) व्याख्याता ( निरु० २ । ५ ) । तस्या एषा भवति ॥ ४१ ॥ ७ ॥

गौरमीमेदनु वत्सं * मिषन्तं मूर्द्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥
ऋ० १ । १६४ । २८ ॥ अथर्व० ६ । १० । ६ ॥

गौरन्वमीमेद्वत्सं निमिषन्तम् । अनिमिषन्तमादित्यमिति वा । मूर्धानमस्याभिहिङ्ङकरोन्मननाय । सृक्वाणं सरणम् । घर्मं हरणम् । अभिवावशाना मिमाति मायुम् । प्रप्यायते पयोभिः । मायुमिवादित्यमिति वा । वागेषा माध्यमिका । घर्मधुगिति याज्ञिकाः ॥

धेनुः ( ३० ) धयतेर्वा । धिनोतेर्वा । तस्या एषा भवति ॥ ४२ ॥ ८ ॥

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥
ऋ० १ । १६४ । २६ ॥

* गौरमीमेदभि वत्सं । इति पाठः अथर्व संहितायाम् ॥ सं० ॥

उपह्वये सुदोहनां * धेनुमेताम् । कल्याणहस्तो गोधुगपि च दोग्ध्येनाम् † । श्रेष्ठं सवं सविता सुनोतु नः—इत्येष हि श्रेष्ठः सर्वेषां सवानां यदुदकम् । यद्वा पयो यजुष्मत् । अभीद्धो घर्मः । तं सु प्रब्रवीमि । वागेषा माध्यमिका । घर्मधुगिति याज्ञिकाः ॥

अघ्न्या (३१) ऽहन्तव्या भवति । अघघ्नीति वा । तस्या एषा भवति ॥ ४३ ॥ ९ ॥

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥

ऋ० १ । १६४ । ४० ॥

सुयवसादिनी भगवती हि भव । अथेदानीं वयं भगवन्तः स्याम । अद्धि तृणमघ्न्ये सर्वदा । पिब च शुद्धमुदकमाचरन्ती । तस्या एषाऽपरा भवति ॥ ४४ ॥ १० ॥

हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥

ऋ० १ । १६४ । २७ ॥

इति सा निगदव्याख्याता ॥

पथ्या ‡ ( ३२ )स्वस्तिः ( ३३ ) । पन्था अन्तरिक्षम् । तन्निवासात् । तस्या एषा भवति ॥ ४५ ॥ ११ ॥

---

* सुदुघां, सुदोहां इति पाठान्तरे ॥ † दोग्धु एनाम् । इति पाठा० ॥

‡ अत्र "पथ्यास्वस्ति" एकैव देवतेति मत्वेषव्याख्याता, निघण्टौ तु पृथक् पृथक् परिगणित इति चिन्त्यम् ॥ सं० ॥

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥
ऋ० १० । ६३ । १६ ॥

स्वस्तिरेव हि प्रपथे श्रेष्ठा । रेक्णस्वती धनवती । अभ्येति या वसूनि वननीयानि । सा नोऽमा गृहे । सा निरमणे । सा निर्गमने । पातु । स्वावेशा भवतु । देवी गोप्त्री । देवान्गोपायत्विति । देवा एनां गोपायन्त्विति वा ॥

उषाः (३४) व्याख्याता (निरु० २ । १८) तस्या एषा भवति ॥ ४६ ॥ १२ ॥

अपोषा अनसः सरत्सम्पिष्टादह बिभ्युषी ।
नि यत्सीं शिश्नथद्वृषा ॥ ऋ० ४ । ३० । १० ॥

अपासरदुषा अनसः सम्पिष्टान्मेघाद् बिभ्युषी । अनो वायुः । अनितेः अपि वोपमार्थे स्यात् । अनस इव शकटादिव । अनः शकटम् । आनद्धमस्मिश्चीवरम् । अनितेर्वा स्याज्जीवनकर्मणः । उपजीवन्त्येनत् । मेघोऽप्यन एतस्मादेव । यन्निरशिश्नथद्वृषा । वर्षिता मध्यमः * । तस्या एषाऽपरा भवति ॥ ४७ ॥ १३ ॥

एतदस्या अनः शये सुसम्पिष्टं विपाश्या ।
ससार सीं परावतः ॥ ऋ० ४ । ३० । ११ ॥

एतदस्या अन आशेते सुसम्पिष्टमितरदिव । विपाशि विमुक्तपाशि । ससारोषाः परावतः प्रेरितवतः । परागताद्वा ॥

---

* वायुः । इति पाठान्तरम् ॥ सं० ॥

इला * ( ३५ ) व्याख्याता ( निरु० ८ । ७ ) । तस्या एषा भवति † ॥ ४८ ॥ १४ ॥

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ॥

ऋ० ५ । ४१ । १६ ॥

सिषक्तु न ऊर्जव्यस्य पुष्टेः ‡ ॥ ऋ० ५ । ४१ । २० ॥

अभिगृणातु नः इला । यूथस्य माता सर्वस्य माता । स्मदभि नदीभिः । उर्वशी + वा गृणातु । उर्वशी वा । बृहद्दिवा महद्दिवा । गृणाना । अभ्यूर्ण्वाना । प्रभृथस्य प्रभृतस्य । आयोरयनस्य × । मनुष्यस्य । ज्योतिषो वोदकस्य वा । सेवतां नोऽन्नस्य पुष्टेः ॥

---

* इडा । इति पाठा० ॥

† अत्रैकवचनप्रयोगेण यास्कमते "अभि न इडा" "सिषक्तु न०" इत्येका ऋक्, अनुक्रमणिकाकारमते तु एते ऋचे द्वे । इति ॥

‡ याजुषी पंक्तिश्छन्दः ॥

+ ( उर्वशी ) उरवो बहवो वशे भवन्ति यया सा वाणी । बहुवशकर्त्री प्रज्ञा वा । उर्वशीति पदनाम ( निघ० ४ । २ ) । तस्माद्विद्युदाद्यर्थाः अपि संभवन्ति ॥

× इस मन्त्र में आयुष्यवृद्धिका सुन्दर उपाय वर्णित है । महर्षि दयानन्द सरस्वती अपने ऋग्वेदभाष्य में इस मन्त्र के भावार्थ में लिखते हैं :—हे मनुष्यो ! आप लोग जो सत्यभाषण से युक्त वाणी को धारण करें तो आप लोगों की अवस्था बढ़े ॥ सं० ॥

रोदसी ( ३९ ) रुद्रस्य पत्नी । तस्या एषा भवति ॥ ४९ ॥ १५ ॥

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।
आ यस्मिन्तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥

ऋ० ५ । ५६ । ८ ॥

रथं क्षिप्रं मारुतं मेघं वयं * श्रवणीयमाह्वयामहे । आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी † रोदसी ॥ ५० ॥ १६ ॥

---

इति निरुक्तोत्तरषट्के पञ्चमाध्यायस्य चतुर्थः पादः ॥

---

समाप्तश्चायमध्यायः ॥

---

निरुक्त एकादशाऽध्यायश्च समाप्तः ॥

---

* मारुतं वयं । इति पाठा० ॥

† रोदसी=रुद्रस्य वायोः सहचारिणी विद्युदिति चन्द्रमणिः । भूमिसूर्यौ इति भगवद्दयानन्दः ॥ सं० ॥

ओ३म्

# अथ षष्ठाऽध्यायारम्भः ॥

[ निरुक्ते द्वादशोऽध्यायः ]

---

## तत्र प्रथमः पादः ॥

### अथातो द्युस्थाना देवताः ॥

तासामश्विनौ ( निघ० ५ । ६ । १ ) प्रथमागामिनौ भवतः । अश्विनौ यद्व्यश्नुवाते सर्वम् । रसेनान्यो ज्योतिषान्यः । अश्वैरश्विनावित्यौर्णवाभः । तत्कावश्विनौ ? द्यावापृथिव्यावित्येके । अहोरात्रावित्येके । सूर्याचन्द्रमसावित्येके । राजानौ पुण्यकृतावित्यैतिहासिकाः । तयोः काल ऊर्ध्वमर्धरात्रात् । प्रकाशीभावस्यानुविष्टम्भमनु । तमो भागो हि मध्यमः । ज्योतिर्भाग आदित्यः । तयोरेषा भवति ॥ १ ॥

वसातिषु स्म चरथोऽसितौ पेत्वाविव ।

कुदेदमश्विना युवमभि देवाँ अगच्छतम् ॥

इति सा निगदव्याख्याता । तयोः समानकालयोः समानकर्मणोः संस्तुतप्राययोरसंस्तवेनैषोऽर्धर्चो भवति ।

"वासात्यो अन्य उच्यत उषः पुत्रस्तवान्यः"

इति । तयोरेषाऽपरा भवति ॥

इहेह जाता समवावशीतामरेपसा तन्वा॒ नामभिः स्वैः ।

जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे ॥

ऋ० १ । १८१ । ४ ॥

इह चेह च जातौ संस्तूयेते। पापेनालिप्यमानया तन्वा। नामभिश्च स्वैः। जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमः। दिवोऽन्यः सुभगः पुत्र ऊह्यत आदित्यः। तयोरेषाऽपरा भवति ॥ ३ ॥

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम्।

अस्य सोमस्य पीतये ॥ ऋ० १। २२। १ ॥

प्रातर्योगिनौ विबोधयाश्विनौ। इहागच्छतामस्य सोमस्य पानाय। तयोरेषाऽपरा भवति ॥ ४ ॥

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम्।

उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥

ऋ० ५। ७७। २ ॥

प्रातर्यजध्वमश्विनौ। प्रहिणुत। न सायमस्ति देवेज्या। अजुष्टमेतत्। अप्यन्योऽस्मद्यजते। वि चावः। पूर्वः पूर्वो यजमानो वनीयान्वनयितृतमः। तयोः कालः सूर्योदयपर्यन्तः। तस्मिन्नन्यादेवता ओप्यन्ते *॥

उषाः (२) वष्टेः कान्तिकर्मणः। उच्छतेरितरा माध्यमिका। तस्या एषा भवति ॥ ५ ॥

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति।

येन तोकं च तनयं च धामहे ‡ ॥ ऋ० १। ९२। १३॥

उषस्तच्चित्रं चायनीयं मंहनीयं धनमाहरास्मभ्यम्। अन्नवति! येन पुत्रांश्च पौत्रांश्च दधीमहि। तस्या एषाऽपरा भवति ॥ ६ ॥

---

* उप्यन्ते। इति पाठा० ॥

‡ अत्र धाञ् धातोर्लेटि "बहुलं छन्दसि" अ० २। ४। ७६ ॥ इति श्लोरभावः ॥ सं० ॥

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥

ऋ० १ । ९२ । १ ॥ साम० उ० आ० ८ । ३ । १६ । १ ॥

एतास्ता उषसः केतुमकृषत । प्रज्ञानम् । एकस्या एव पूजनार्थे बहुवचनं स्यात् । पूर्वेऽर्धेऽन्तरिक्षलोकस्य समञ्जते भानुना । निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने ।

एमीदेषां निष्कृतं जारिणीव ॥ ऋ० १० । ३४ । ५ ॥

इत्यपि निगमो भवति । प्रतियन्ति गावो गमनात् । अरुषीरारोचनात् । मातरो भासो निर्मात्र्यः ॥

सूर्या (३) सूर्यस्य पत्नी । एषैवाभिसृष्टकालतमा । तस्या एषा भवति ॥ ७ ॥

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व ॥

ऋ० १० । ८५ । २० ॥

सुकाशनं शल्मलं सर्वरूपम् । अपि वोपमार्थे स्यात् । सुकिंशुकमिव शल्मलिमिति । किंशुकं क्रंशतेः प्रकाशयतिकर्मणः । शल्मलिः सुशरो भवति । शरवान्वा । आरोह सूर्ये अमृतस्य लोकम् । उदकस्य । सुखं पत्ये वहतुं कुरुष्व । सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वा इति च ब्राह्मणम् * ॥

* किञ्चित् पाठभेदेन ऐ० ब्राह्मणे ॥ ४ । २ । १ ॥ सं० ॥

वृषाकपायी (४) वृषाकपेः पत्नी। एषैवाभिसृष्टकालतमा। तस्या एषा भवति ॥ ८ ॥

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे।
घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः॥

ऋ० १०। ८६। १३॥

वृषाकपायि रेवति। सुपुत्रे मध्यमेन। सुस्नुषे माध्यमिकया वाचा। स्नुषा साधुसादिनीति वा। साधुसानिनीति वा। सु अपत्यम्। तत्सनोतीति वा। प्राश्नातु त इन्द्र उक्षणः। एतान्माध्यमिकान्त्संस्त्यायान्। उक्षण उक्षतेर्वृद्धिकर्मणः। उक्षन्त्युदकेनेति वा †। प्रियं कुरुष्व सुखचयकरं ‡ हविः। सुखकरं हविः। सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम्॥

सरण्यूः (५) सरणात्। तस्या एषा भवति॥ ९॥

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामदुर्विवस्वते।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः॥

ऋ० १०। १७। २॥

अप्यगूहन्नमृतां + मर्त्येभ्यः। कृत्वी × सवर्णामदुर्विवस्वते। अप्यश्विनावभरत्। यत्तदासीत्। अजहादु द्वौ मिथुनौ सरण्यूः। मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः। यमं च यमीं चेत्यैतिहासिकाः। तत्रेतिहासमाचक्षते:—त्वाष्ट्री सरण्यूर्विव-

† उक्षतेः वा सिञ्चनकर्मणः। इति पाठा० ॥

‡ सुखाचयकरं। इति पाठा० ॥

+ अपागूहन्। इति पाठा० ॥

× कृत्वा। इति पाठा० ॥ सं० ॥

ष्वत आदित्याद्यमौ मिथुनौ जनयाञ्चकार । सा सवर्णामन्यां प्रतिनिधायाश्वं रूपं कृत्वा प्रदुद्राव । स विवस्वानादित्य आश्वमेव रूपं कृत्वा तामनुसृत्य सम्बभूव । ततोऽश्विनौ जज्ञाते । सवर्णायां मनुः । तदभिवादिन्येषर्ग्भवति ॥ १० ॥

त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒ती॒तीदं॒ विश्वं॒ भुव॑नं॒ समे॑ति ।
य॒मस्य॑ मा॒ता प॑र्यु॒ह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश ॥

ऋ० १० । १७ । १ ॥

त्वष्टा दुहितुर्वहनं करोति । इतीदं विश्वं भुवनं समेति । इमानि च सर्वाणि भूतान्यभिसमागच्छन्ति । यमस्य माता पर्युह्यमाना महतो जाया विवस्वतो ननाश । रात्रिरादित्यस्य । आदित्योदयेऽन्तर्धीयते ॥ ११ ॥

इति षष्ठाऽध्यायस्य प्रथमः पादः ॥

---

## अथ द्वितीयः पादः ॥

सविता (७) व्याख्यातः ( निरु० ७ । ३१ ॥ १० । ३१ ) । तस्य कालो यदा द्यौरपहततमस्काऽऽकीर्णरश्मिर्भवति । तस्यैषा भवति ॥ १२ ॥ १ ॥

विश्वा॑ रू॒पाणि॒ प्रति॑ मुञ्चते क॒विः प्रासा॑वीद्भ॒द्रं द्वि॒पदे॒ चतु॑ष्पदे ।
वि नाक॑मख्यत्सवि॒ता वरे॑ण्योऽनु॑ प्र॒याण॑मु॒षसो॒ वि रा॑जति ॥

ऋ० ५ । ८१ । २ ॥

सर्वाणि प्रज्ञानानि प्रतिमुञ्चते मेधावी । कविः क्रान्तदर्शनो भवति । कवतेर्वा । प्रसुवति भद्रं द्विपाद्भ्यश्च । व्यचिख्यपन्नाकं सविता वरणीयः । प्रयाणमनूषसो विराजति ।

अधोरामः सावित्रः ॥ यजुः० २९ । ५८॥

इति पशुसमाम्नाये विज्ञायते। कस्मात् सामान्यादिति? अधस्तात्तद्वेडायां * तमो भवत्येतस्मात्सामान्यात्। 'अधस्ताद्रामोऽधस्तात्कृष्णः'। कस्मात्सामान्यादिति? 'अग्निं चित्वा न रामामुपेयात्'। 'रामा रमणायोपेयते न धर्माय' कृष्णजातीया एतस्मात्सामान्यात्।

कृकवाकुः सावित्रः ॥ यजुः० २४। ३५ ॥

इति पशुसमाम्नाये विज्ञायते। कस्मात्सामान्यादिति? कालानुवादं परीत्य। कृकवाकोः पूर्वं शब्दानुकरणम्। वचेरुत्तरम् ॥

भगः (८) व्याख्यातः (निरु० ३। १९)। तस्य कालः प्रागुत्सर्पणात्। तस्यैषा भवति ॥ १३ ॥ २ ॥

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥

ऋ० ७। ४१। २॥ यजुः० ३४। ३५॥

प्रातर्जितं भगमुग्रं ह्वयेम वयं पुत्रमदितेः। यः विधारयिता सर्वस्य। आध्रश्चिद्यं मन्यमानः। आढ्याद्दुर्दरिद्रः † । तुरश्चित्। तुर इति यमनाम। तरतेर्वा। त्वरतेर्वा। त्वरया तूर्णगतिर्यमः। राजा चित्। यं भग भक्षीत्याह। अन्धो भगः (कौषी० ब्रा० ६। १३॥ शत० ब्रा० १। ७। ४। ६) इत्याहुः। अनुत्सृप्तो न दृश्यते। प्राशित्रमस्याक्षिणी निर्जघान (कौषी० ब्रा० ६। १३) इति

* तद्वेलायां। इति पाठा० ॥

† आढ्यालुर्दरिद्रः। इति पाठा० ॥ सं० ॥

च ब्राह्मणम् । "जनं भगो गच्छति" ( मैत्रा० सं० १ । ६ । १२ ) इति वा । जनं गच्छत्यादित्य उदयेन ॥

सूर्यः ( ९ ) सर्तेर्वा । सुवतेर्वा । स्वीर्यतेर्वा ‡ । तस्यैषा भवति ॥ १४ ॥ ३ ॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

ऋ० १ । ५० । १ ॥ यजुः० ७ । ४१ ॥

उद्वहन्ति तं जातवेदसं रश्मयः केतवः सर्वेषां भूतानां दर्शनाय सूर्यमिति । कमन्यमादित्यादेवमवक्ष्यत् ? तस्यैषापरा भवति ॥ १५ ॥ ४ ॥

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा + द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च* ॥

ऋ० १ । ११५ । १ ॥ अथर्व० १३ । २ । ३५ ॥ यजुः० ७ । ४२ ॥

चायनीयं देवानामुदगमदनीकम् । ख्यानं मित्रस्य वरुणस्याग्नेश्च । आपूपुरद् द्यावापृथिव्यौ चान्तरिक्षं च महत्त्वेन । तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च ॥

अथ यद्रश्मिपोषं पुष्यति तत्पूषा ( १० ) भवति । तस्यैषा भवति ॥ १६ ॥ ५ ॥

---

‡ सायणेन स्वकीये ऋग्वेदभाष्ये ( का० १, सू० ३, मं० ४ ) उद्धृतेयं निरुक्तिः ॥ + आप्राद् । इति पाठोऽथर्वसंहितायाम् ॥

* यजुर्वेदे 'स्वाहा' इत्यधिकः पाठः ॥ सं० ॥

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥
ऋ० ६ । ५८ । १ ॥

शुक्रं ते अन्यल्लोहितं ते अन्यत् । यजतं ते अन्यद्यज्ञियं ते अन्यत् । विषमरूपे † ते अहनी कर्म । द्यौरिव चासि । सर्वाणि प्रज्ञानान्यवसि । अन्नवन् ! भाजनवती ते पूषन्निह दत्तिरस्तु । तस्यैषाऽपरा भवति ॥ १७ ॥ ६ ॥

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।
स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥
ऋ० ६ । ४० । ८ ॥

पथस्पथोऽधिपतिं वचनेन कामेन कृतोऽभ्यानडर्कमभ्याप-न्नोर्कमिति वा । स नो ददातु चायनीयाग्राणि धनानि । कर्मकर्म च नः प्रसाधयतु पूषेति ॥

अथ यद्विषितो भवति तद्विष्णुः (११) भवति । विष्णु-र्विशतेर्वा ‡ । व्यश्नोतेर्वा । तस्यैषा भवति ॥ १८ ॥ ७ ॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य + पांसुरे ॥
ऋ० १ । २२ । १७ ॥

† विषुरूपे । इति पाठा० ॥
‡ 'विष्णुर्विशतेर्वा' इत्यस्य स्थाने 'विशतेर्वा' इत्येव पाठः पुस्तकान्तरे ॥
+ समूळ्हमस्य । इति पाठा० ॥ सं०

यदिदं किं च तद्विक्रमते विष्णुः । त्रिधा निधत्ते पदम् । त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः * । समूढमस्य पांसुरे प्यायनेऽन्तरिक्षे पदं न दृश्यते । अपि वोपमार्थे स्यात् । समूढमस्य पांसुल ‡ इव पदं न दृश्यत इति । पाँसवः पादैः सूयन्त इति वा । पन्नाः शेरत इति वा । पंसनीया † भवन्तीति वा ॥ १९ ॥ ८ ॥

इति षष्ठाऽध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ॥

विश्वानरः ( १२ ) व्याख्यातः ( निरु० ७ । २१ ) । तस्यैष निपातो भवत्यैन्द्र्यामृचि ॥ २० ॥ १ ॥

विश्वानरस्य वस्पतिमनानतस्य शवसः ।
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥ ऋ० ८ । ६८ । ४ ॥

---

* गयशिरसीत्यत्र गय इत्यपत्यनामसु पठितम् ॥ निघ० २ । २ ॥ गय इति धननामसु च ॥ निघ० २ । १० ॥ प्राणा वै गयाः ॥ श० १४ । ७ । १ । ७ ॥ प्रजायाः शिर उत्तमभागो यत्कारणं तद्विष्णुपदम् । गयानां विद्यादिधनानां यच्छिरः फलमानन्दः सोऽपि विष्णुपदाख्यः । गयानां प्राणानां शिरः प्रीतिजनकं सुखं तदपि विष्णुपदमित्यौर्णवाभाचार्यस्य मतम् । इत्येवं भगवता दयानन्दसरस्वतीस्वामिना स्व ऋग्वेदभाष्ये सुविस्तरमस्य व्याख्यानं कृतम् । तत्रैव ( ऋ० १ । २२ । १७ ) अवलोकनीयं सुधीभिः ॥

‡ पांसुर इव । इति पाठा० ॥

† पिंशनीयाः । इति पाठान्तरं क्वचित् ॥ सं० ॥

विश्वानरस्यादित्यस्य। अनानतस्य शवसो महतो बलस्य। एवैश्च * कामैरयनैरवनैर्वा। चर्षणीनां मनुष्याणाम्। ऊत्या च पथा रथानाम्। इन्द्रमस्मिन्यज्ञे ह्वयामि॥

वरुणः (१३) व्याख्यातः (निरु० १०।३)। तस्यैषा भवति॥ २१॥ २॥

येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑। त्वं व॑रुण॒ पश्य॑सि॥

ऋ० १। ५०। ६॥

भुरण्युः (निघ० २। १५। १४) इति क्षिप्रनाम। भुरण्युः शकुनिः। भूरिमध्वानं नयति। स्वर्गस्य लोकस्यापि वोढा। तत्सम्पाती भुरण्युः। अनेन ‡ पावक! ख्यानेन। भुरण्यन्तं जनाँ अनु। त्वं वरुण पश्यसि। तत्ते वयं स्तुम इति वाक्यशेषः। अपि वोत्तरस्याम् +॥ २२॥ ३॥

येना॑ पावक॒ चक्ष॑सा भुर॒ण्यन्तं॒ जनाँ॒ अनु॑। त्वं व॑रुण॒ पश्य॑सि॥

ऋ० १। ५०। ६॥

वि द्यामे॑षि॒ रज॑स्पृ॒थ्वहा॒ मिमा॑नो अ॒क्तुभिः॑। पश्य॒ञ्जन्मा॑नि सूर्य॥

ऋ० १। ५०। ७॥

व्येषि द्यां रजश्च पृथु। महान्तंल्लोकम्। अहानि च मिमानोऽक्तुभी रात्रिभिः सह। पश्यञ्जन्मानि जातानि सूर्य। अपि वा पूर्वस्याम्॥ २३॥ ४॥

---

* एवः=कामना, गति, रक्षार्थवाची। 'इण' धातोः 'अव' धातोर्वा रूपमिति॥

‡ येन। इति पाठा०॥

\+ 'उत्तरस्यामन्वयस्तेन व्येषि' इति सायणस्वीकृतनिरुक्तमूले; इति राजवाडे सम्पादित निरु० पृष्ठ १६१ टि० ५॥ सं०॥

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥

ऋ० १ । ५० । ६ ॥

प्रत्यङ्देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ्विश्वं स्वर्दृशे ॥

ऋ० १ । ५० । ५ ॥

प्रत्यङ्ङिदं सर्वमुदेषि । प्रत्यङ्ङिदं सर्वमभिविपश्यसीति । अपि वैतस्यामेव ॥ २४ ॥ ५ ॥

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु । त्वं वरुण पश्यसि ॥

ऋ० १ । ५० । ६ ॥

तेन नो जनानभिविपश्यसि ॥

केशी (१४) । केशा रश्मयः । तैस्तद्वान् भवति । काशनाद्वा । प्रकाशनाद्वा । तस्यैषा भवति ॥ २५ ॥ ६ ॥

केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी ।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥

ऋ० १० । १३६ । १ ॥

केश्यग्निं च विषं च । विषम् ( निघ० १।१२।१५) इत्युदकनाम । विष्णातेः । विपूर्वस्य स्नातेः शुद्धयर्थस्य । विपूर्वस्य वा सचतेः । द्यावापृथिव्यौ च धारयति । केशीदं सर्वमिदमभिविपश्यति । केशीदं ज्योतिरुच्यत इत्यादित्यमाह ॥

अथाप्येते इतरे ज्योतिषी केशिनी ( १५ ) उच्येते । धूमेनाग्नी रजसा च मध्यमः । तेषामेषा * साधारणा भवति ॥ २६ ॥ ७ ॥

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥

ऋ० १ । १६४ । ४४ ॥

त्रयः केशिन ऋतुथा विचक्षते कालेकालेऽभिविपश्यन्ति । संवत्सरे वपत एक एषामित्यग्निः ‡ पृथिवीं दहति । सर्वमेकोऽभिविपश्यति कर्मभिरादित्यः + । गतिरेकस्य दृश्यते न रूपं मध्यमस्य ॥

अथ यद्रश्मिभिरभिप्रकम्पयन्नेति तद्वृषाकपिः ( १६ ) भवति । वृषाकम्पनः । तस्यैषा भवति ॥ २७ ॥ ८ ॥

पुनरेहि वृषाकपे सुविता कल्पयावहै ।
य एष स्वप्ननंशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥

ऋ० १० । ८६ । २१ ॥

पुनरेहि वृषाकपे । सुप्रसूतानि वः कर्माणि कल्पयावहै । य एष स्वप्ननंशनः । स्वप्नान्नाशयस्यादित्य × उदयेन । सोऽस्तमेषि पथा पुनः । सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् ॥

यमः ( १७ ) व्याख्यातः ( निरु० १० । १९ ) । तस्यैषा भवति ॥ २८ ॥ ९ ॥

---

* तयोरेषा । इति पाठा० ॥ ‡ तेषामित्यग्निः । इति पाठा० ॥

+ शचीति कर्मनाम ( निघ० २ । १ ) ॥

× आदित्य ! उदयेन । इति पाठा० ॥ सं० ॥

यस्मिन्वृक्षे सुपलाशे देवैः सम्पिबते यमः ।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति ॥

ऋ० १० । १३५ । १ ॥

यस्मिन्वृक्षे सुपलाशे स्थाने । वृतक्षये * वा । अपि वोपमार्थे स्यात् । वृक्ष इव सुपलाशे इति । वृक्षो व्रश्चनात् । पलाशं पलाशनात् ‡ । देवैः सङ्गच्छते यमो रश्मिभिरादित्यः । तत्र नः सर्वस्य पाता वा पालयिता वा पुराणाननुकामयेत ॥

अजः एकपात् ( १८ ) । अजनः एकः पादः । एकेन पादेन पातीति वा । एकेन पादेन पिबतीति वा । एकोऽस्य पाद इति वा ।

एकं पादं नोत्खिदति ॥ अथ० ११ । ४ । २१ ॥

इत्यपि निगमो भवति । तस्यैष निपातो भवति वैश्वदेव्यामृचि ॥ २९ ॥ १० ॥

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः ।
विश्वेदेवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरन्ध्या ॥

ऋ० १० । ६५ । १३ ॥

पविः ( निघ० २ । २० । ५ ) शल्यो भवति । यद्विपुनाति कायम् । तद्वत्पवीरमायुधम् । तद्वानिन्द्रः पवीरवान् ।

आतितस्थौ पवीरवान् ॥ ऋ० १० ।६० । ३ ॥

* वृतक्षयका संक्षिप्त रूप वृक्ष है जिसका अर्थ है स्वीकृतों अर्थात् मुक्तात्माओं का निवासस्थान ( द्युलोक ) । इति चन्द्रमणिः ॥

‡ पलाशदनात् । इति पाठ० ॥ सं० ॥

इत्यपि निगमो भवति। तद्देवतावाक् पावीरवी। पावीरवी च दिव्या वाक्। तन्यतुस्तनित्री वाचोऽन्यस्याः। अजश्चैकपाद्। दिवो धारयिता सिन्धुश्चापश्च समुद्रियाश्च +। सर्वे च देवाः। सरस्वती च सह पुरन्ध्या। स्तुत्या प्रयुक्तानि। धीभिः कर्मभिर्युक्तानि। शृण्वन्तु वचनानीमानीति॥

पृथिवी (१९) व्याख्याता (निरु० १। १३, ११। ३७)। तस्या एष निपातो भवत्यैन्द्राग्न्यामृचि॥ ३०॥ ११॥

यदि॑न्द्राग्नी पर॒मस्यां॑ पृथि॒व्यां म॑ध्य॒मस्या॑मव॒मस्या॑मु॒त स्थः।
अ॒तः परि॑ वृषणा॒वा हि या॒तमथा॒ सोम॑स्य पिबतं सु॒तस्य॑॥

ऋ० १। १०८। १०॥

इति सा निगदव्याख्याता॥

समुद्रः (२०) व्याख्यातः (निरु० २। १०)। तस्यैष निपातो भवति पावमान्यामृचि॥ ३१॥ १२॥

प॒वित्र॑वन्तः॒ परि॒ वाच॑मासते पि॒तैषां॑ प्र॒त्नो अ॒भि र॑क्षति व्र॒तम्।
म॒हः स॑मु॒द्रं वरु॑णस्ति॒रो द॑धे॒ धीरा॑ इच्छेकु॒र्धरु॑णेष्वा॒रभ॑म्॥

ऋ० ९। ७३। ३।

पवित्रवन्तो रश्मिवन्तो माध्यमिका देवगणाः पर्यासते माध्यमिकां वाचम्। पितैषां × प्रत्नः पुराणोऽभिरक्षति व्रतं कर्म। महः समुद्रं वरुणस्तिरोऽन्तर्दधाति। अथ धीरा शक्नुवन्ति धरुणेषूदकेषु कर्मण आरम्भमारब्धुम्॥

---

+ दिवः धारयिता च सिन्धुः। आपः च समुद्रियाः च। इति पाठा०॥
× मध्यमः पितैषां। इति पाठा०॥ सं०॥

अज एकपाद् व्याख्यातः (निरु० १२ । २९) । पृथिवी व्याख्याता (निरु० १ । १३, ११ । ३७) । समुद्रः व्याख्यातः (निरु० २ । १०) । तेषामेष निपातो भवत्यपरस्यां बहुदेवतायामृचि ॥ ३२ । १३ ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥

ऋ० ६ । ५० । १४ ॥

अपि च नोऽहिर्बुध्न्यः शृणोतु । अजश्चैकपात् । पृथिवी च । समुद्रश्च । सर्वे च देवाः । सत्यवृधो वा यज्ञवृधो वा ‡ । हूयमाना मन्त्रैः स्तुता मन्त्राः कविशस्ता अवन्तु । मेधाविशस्ताः ।

दध्यङ् (२१) प्रत्यक्तो ध्यानमिति वा । प्रत्यक्तमस्मिन्ध्यानमिति वा * ॥ अथर्वा (२२) व्याख्यातः (निरु० ११ । १८) । मनुः (२३) मननात् । तेषामेष निपातो भवत्यैन्द्र्यामृचि ॥ ३३ ॥ १४ ॥

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत । तस्मिन्ब्रह्माणि पूर्वथेन्द्र उक्था समग्मतार्चन्ननु स्वराज्यम् ॥ ऋ० १ । ८० । १६ +

यामथर्वा च मनुश्च पिता मानवानां दध्यङ् च धियमतनिषत । तस्मिन्ब्रह्माणि कर्माणि पूर्वेन्द्र उक्थानि च सङ्गच्छन्ताम् । अर्चन्योऽनूपास्ते स्वाराज्यम् ॥ ४३ ॥ १५ ॥

इति षष्ठाऽध्यायस्य तृतीयः पादः ॥

---

‡ उदकवृधो वा । इति पाठा० ॥

* ध्यानपूर्वकादञ्चतेर्कर्तर्यधिकरणे वा क्विन् प्रत्ययः ॥

+ भगवद्दयानन्दभाष्यमप्यत्र द्रष्टव्यम् ॥ सं० ॥

## अथ चतुर्थः पादः ॥

### अथातो द्युस्थाना देवगणाः ॥

तेषामादित्याः प्रथमागामिनो भवन्ति । आदित्याः ( २४ ) व्याख्याताः ( निरु० २ । १३ ) । तेषामेषा भवति ॥ ३५ ॥ १ ॥

इमा गिर॑ आ॒दि॒त्येभ्यो॑ घृ॒तस्नूः॑ स॒नाद्राज॑भ्यो जु॒ह्वा॑ जुहोमि ।
शृ॒णोतु॑ मि॒त्रो अ॑र्य॒मा भगो॑ नस्तुविजा॒तो वरु॑णो॒ दक्षो॒ अंशः॑ ॥

ऋ० २ । २७ । १ ॥

घृतस्नूर्घृतप्रस्नाविन्यः । घृतप्रस्राविण्यः । घृतसानिन्यः । घृतसारिण्य इति वा । आहुतीरादित्येभ्यश्चिरं जुह्वा जुहोमि । चिरं राजभ्य * इति वा । शृणोतु न इमा गिरो मित्रश्चार्यमा च भगश्च बहुजातश्च धाता दक्षो वरुणोऽंशश्च । अंशः अंशुना व्याख्यातः ( निरु० २ । ५ ) ॥

सप्त ( निरु० ४ । २६ ) ऋषयः ( २५ ) (निरु० २ । ११ ) व्याख्याताः । तेषामेषा भवति ॥ ३६ । २ ॥

स॒प्त ऋष॑यः॒ प्रति॑हिताः॒ शरी॑रे स॒प्त र॑क्षन्ति॒ सद॒मप्र॑मादम् ।
स॒प्तापः॒ स्वप॑तो लो॒कमी॑यु॒स्तत्र॑ जागृ॒तो अस्व॑प्नजौ सत्र॒सदौ॑ च दे॒वौ ॥

यजुः-३४ । ५५ ॥

सप्त ऋषयः प्रतिहिताः शरीरे । रश्मय आदित्ये । सप्त रक्षन्ति सदमप्रमादम् । संवत्सरमप्रमाद्यन्तः । सप्तापनास्त एव स्वपतो लोकमस्तमितमादित्यं यन्ति । तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ । वाय्वादित्यौ । इत्यधिदैवतम् । अथाध्यात्मम्—

* चिरं जीवनाय । चिरं राजभ्यः । इति पाठा० ॥ सं० ॥

सप्त ऋषयः प्रतिहिताः शरीरे । षडिन्द्रियाणि विद्या सप्तमी । आत्मनि । सप्त रक्षन्ति सदमप्रमादम् । शरीरमप्रमाद्यन्ति । सप्तापनानीमान्येव स्वपतो लोकमस्तमितमात्मानं यन्ति । तत्र जागृतोऽस्वप्नजौ सत्रसदौ च देवौ । प्राज्ञश्चात्मा तैजसश्च । इत्यात्मगतिमाचष्टे । तेषामेषाऽपरा भवति ॥ ३७ ॥ ३ ॥

ति॒र्यग्बि॑लश्चम॒स ऊ॒र्ध्वबु॑ध्नो॒ यस्मि॒न्यशो॒ * निहि॑तं वि॒श्वरू॑पम् ।
अत्रा॑स॒त ‡ ऋष॑यः स॒प्त सा॒कं ये अ॒स्य गो॒पा म॑ह॒तो ब॑भू॒वुः ॥

अथ० १० । ८ । ९ ॥

तिर्यग्बिलश्चमस ऊर्ध्वबन्धनः । ऊर्ध्वबोधनो वा । यस्मिन्यशो निहितं सर्वरूपम् । अत्रासत ऋषयः सप्त सहादित्यरश्मयः । ये अस्य गोपा महतो बभूवुः । इत्यधिदैवतम् । अथाध्यात्मम्— तिर्यग्बिलश्चमस ऊर्ध्वबन्धनः । ऊर्ध्वबोधनो वा । यस्मिन्यशो निहितं सर्वरूपम् । अत्रासत ऋषयः सप्त सहेन्द्रियाणि । यान्यस्य गोप्तॄणि महतो बभूवुः । इत्यात्मगतिमाचष्टे ॥

देवाः (२९) व्याख्याताः (निरु० ७ । १५) । तेषामेषा भवति ॥ ३८ ॥ ४ ॥

दे॒वानां॑ भ॒द्रा सु॑म॒तिर्ऋ॑जूय॒तां दे॒वानां॑ रा॒तिर॒भि नो॒ नि व॑र्त्तताम् ।
दे॒वानां॑ स॒ख्यमुप॑ सेदिमा व॒यं दे॒वा न॒ आयुः॒ प्र ति॑रन्तु जी॒वसे॑ ॥

ऋ० १ । ८९ । २ ॥

---

* ऊ॒र्ध्वबु॑ध्न॒स्तस्मि॒न्यशो॒० । इति अथर्ववेदे पाठः ॥

‡ तद॑सत० । इति अथर्ववेदे पाठः ॥ सं० ॥

देवानां वयं सुमतौ कल्याण्यां मतावृजुगामिनामृतुगामिनामिति वा। देवानां दानमभि नो निवर्तताम्। देवानां सख्यमुपसीदेम वयम्। देवा न आयुः प्रवर्द्धयन्तु चिरं जीवनाय॥

विश्वे देवाः (२७) सर्वे देवाः। तेषामेषा भवति॥ ३९॥ ५॥

ओमासश्चर्षणीधृतो विश्वे देवास आ गत। दाश्वांसो दाशुषः सुतम्॥

ऋ० १। ३। ७॥

अवितारो वा। अवनीया वा। मनुष्यधृतः सर्वे च देवा इहागच्छत। दत्तवन्तो दत्तवतः सुतमिति। तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते। यत्तु किंचिद् बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते। यदेव विश्वलिङ्गमिति शाकपूणिः। अनत्यन्तगतस्त्वेष उद्देशो भवति। बभ्रुरेकः (ऋ० ८। २९) इति दश द्विपदा अलिङ्गाः। भूतांशः काश्यप आश्विनम् (ऋ० १०। १०६) एकलिङ्गम्। अभितष्टीयं सूक्तम् (ऋ० ३। ३८) एकलिङ्गम्॥

साध्याः (२८) देवाः साधनात्। तेषामेषा भवति॥ ४०॥ ६॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

ऋ० १। १६४। ५० ‡॥

* उपसेदिम। इति पाठान्तरम्। अत्रान्येषामपि दृश्यत इति दीर्घत्वम्॥

‡ ऋ० १०। ९०। १६॥ अथर्व० ७। ५। १॥ यजु० ३१। १६॥ तै० सं० ३। ५। ११। ५॥ तै० आ० ३। २। ७॥ श० ब्रा० १०। २। २। २॥ का० सं० १५। १२॥ सं०॥

यज्ञेन यज्ञमयजन्त देवाः । अग्निनाग्निमयजन्त देवाः । अग्निः पशुरासीत्तमालभन्त तेनायजन्तेति च ब्राह्मणम् । तानि धर्म्माणि प्रथमान्यासन् । ते ह नाकं महिमानः समसेवन्त † । यत्र पूर्वे साध्याः सन्ति देवाः । साधनाः ‡ । द्युस्थानो देवगण इति नैरुक्ताः । पूर्वं देवयुगमित्याख्यानम् ॥

वसवः ( २९ ) यद्विवसते सर्वम् । अग्निर्वसुभिर्वासव इति समाख्या । तस्मात्पृथिवीस्थानाः । इन्द्रो वसुभिर्वासव इति समाख्या तस्मान्मध्यस्थानाः । वसव आदित्यरश्मयो विवासनात्तस्माद् द्युस्थानाः । तेषामेषा भवति ॥ ४१ ॥ ७ ॥

सुगा वो देवाः सदनमकर्म * य आजग्मुः सवनमिदं जुषाणाः ।
जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥
यजु० ८ । १८ ॥ ‡

---

† संसेव्यन्त । इति पाठा० ॥ ‡ साधनात् । इति पाठा० ॥

* " सुपथा अकर्म ", "सदना अकर्म" । इति पाठान्तरे ॥

‡ अत्यल्प भेदेनाऽयं मन्त्रः काठक संहितायां ( ४ । १२ ) दृश्यते । तत्र 'सदनाऽकर्म' इत्यस्य स्थाने 'सदनेदमस्तु' इत्येवमस्ति, शेषस्तु समानः ॥

यजुः संहितापाठस्त्वेवमस्तिः—

सुगा वो देवाः सदना ऽ कर्म य ऽ आजग्मेदꣳ सवनं जुषाणाः ।
भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा ॥
याँ२ ऽ आवह उशतो देव देवाँस्तान् प्रेरय स्वे ऽ अग्ने सधस्थे ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वे ऽसुं घर्मꣳ स्वरातिष्ठतानु स्वाहा ॥
यजु० ८ । १८–१९ ॥ सं० ॥

स्वागमनानि वो देवाः सुपथान्यकर्म य आगच्छत सवनानीमानि जुषाणाः । खादितवन्तः पीतवन्तश्च सर्वेऽस्मासु धत्त वसवो वसूनि । तेषामेषाऽपरा भवति ॥ ४२ ॥ ८ ॥

क्ष्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः ॥
अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता + दूतस्य जग्मुषो नो अस्य ॥

ऋ० ७ । ३९ । ३ ॥

क्ष्मया अत्र वसवोऽरमन्त देवाः । क्ष्मा पृथिवी । तस्यां भवाः । उरौ चान्तरिक्षे । मर्जयन्त गमयन्त रमयन्त । शुभ्राः शोभमानाः । अर्वाच एनान्पथो बहुजवाः कुरुध्वम् । शृणुत दूतस्य जग्मुषो नोऽस्याग्नेः ॥

वाजिनः ( ३० ) व्याख्याताः ( निरु० २ । २८ )। तेषामेषा भवति ॥ ४३ ॥ ९ ॥

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद्युयवन्नमीवाः ॥

ऋ० ७ । ३८ । ७ ॥ यजु० ९ । १६ ॥

सुखा नो भवन्तु वाजिनो ह्वानेषु देवतातौ यज्ञे । मितद्रवः सुमितद्रवः । स्वर्काः स्वञ्चना इति वा । स्वर्चना इति वा । स्वर्चिष इति वा । जम्भयन्तोऽहिं च वृकं च रक्षांसि च क्षिप्रमस्मद्यावयन्त्वमीवाः । देवाश्वा इति वा ॥

देवपत्न्यः ( ३१ ) देवानां पत्न्यः । तासामेषा भवति ॥ ४४ ॥ १० ॥

---

+ ( श्रोत ) शृणुत । अत्र द्व्यचोतस्तिङ इति दीर्घः ॥ सं० ॥

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये ।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत ॥

ऋ० ५ । ४६ । ७

देवानां पत्न्य उशत्योऽवन्तु नः । प्रावन्तु नस्तुजयेऽपत्यजननाय चान्नसंसननाय च । याः पार्थिवासो या अपामपि व्रते कर्मणि ता नो देव्यः सुहवाः शर्म यच्छन्तु शरणम् । तासामेषाऽपरा भवति ॥ ४५ ॥ ११ ॥

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य१ग्नाय्यश्विनी राट् ।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥

ऋ० ५ । ४६ । ८ ॥

अपि च ग्ना * व्यन्तु देवपत्न्यः । इन्द्राणीन्द्रस्य पत्नी । अग्नाय्यग्नेः पत्नी । अश्विन्यश्विनोः पत्नी ॥ राट् राजतेः । रोदसी रुद्रस्य पत्नी । वरुणानी च वरुणस्य पत्नी । व्यन्तु देव्यः कामयन्ताम् । य ऋतुः कालो जायानां य ऋतुः कालो जायानाम् ‡ ॥ ४६ ॥ १२ ॥

इति निरुक्तोत्तरषट्के षष्ठाऽध्यायस्य चतुर्थः पादः ॥

---

समाप्तश्चायमध्यायः ॥

---

निरुक्ते द्वादशाऽध्यायश्च समाप्तः ॥

---

* "ग्नाः" इति वाङ्नाम ( निघ० १ । ११ )
द्विश उत्तरनामसु च ( निघ० ३ । २६ ) ॥
"मेना ग्नाः" इति स्त्रीणाम् ( निरु० ३ । २१ ) ॥
"छन्दांसि वै ग्नाः" ( तै० ब्रा० ५ । १७) ॥

‡ बहूपयोगित्वाद्द्रष्टव्यमत्र महर्षि दयानन्दभाष्यम् ॥
ऋ० १ । २२ । ६; ५ । ४६ । ८ ॥ सं० ॥

॥ ओ३म् ॥

# अथ परिशिष्टम् ॥

---

## अथ प्रथमाध्यायः ।

[ निरुक्ते त्रयोदशोऽध्यायः ]

अथेमा अतिस्तुतय इत्याचक्षते । अपि वा संप्रत्यय एव स्यात् । महाभाग्याद् देवतायाः । सोऽग्निमेव प्रथममाह:—

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः ॥ ऋ० २ । १ । १ ॥

इति यथैतस्मिन्त्सूक्ते ।

नहि त्वदारे निमिषश्चनेशे * ॥ ऋ० २ । २८ । ६ ॥

इति वरुणस्य । अथैषेन्द्रस्य ॥ १ ॥

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥

ऋ० ८ । ७० । ५ ॥

यदि त इन्द्र शतं दिवः शतं भूमयः प्रतिमानानि स्युः । न त्वा वज्रिन्! सहस्रमपि सूर्याः । न द्यावापृथिव्यावप्यभ्यश्नुवीतामिति । अथैषाऽऽदित्यस्य ॥ २ ॥

---

* निमिषश्चनेशे । इत्येवं संयुक्तः पाठः संहितायाम् । भगवद्दयानन्दभाष्ये तु पृथक् पृथक् इति ॥ स० ॥

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन ।
क्व१स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥

ऋ० १० । ८६ । २२ ॥

यदुदञ्चो वृषाकपे ! गृहमिन्द्राजगमत । क स्य पुल्वघो मृगः क स बह्वादी मृगः ? मृगो मार्ष्टेर्गतिकर्मणः । कमगमद् देशं जनयोपनः ? सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् । अथैषाऽऽदित्यरश्मीनाम् ॥ ३ ॥

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत ।
यत्रामदद्वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः ॥

ऋ० १० । ८६ । १ ॥

व्यसृक्षत हि प्रसवाय । न चेन्द्रं देवममंसत । यत्रामाद्यद्वृषाकपिरर्य ईश्वरः पुष्टेषु पोषेषु । मत्सखा मम सखा । मदनसखा । ये नः सखायस्तैः सहेति वा । सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यम् । अथैषाऽश्विनोः ‡ ॥ ४ ॥ *

सृण्येव जर्भरी तुर्फरीतू नैतोशेव तुर्फरी पर्फरीका ।
उदन्यजेव जेमना मदेरू ता मे जराय्वजरं मरायु ॥

ऋ० १० । १०६ । ६ ॥

---

‡ वाचः प्रवह्लितेव । इति पाठान्तरम् ॥

* “पञ्चमषष्ठसप्तमाष्टमाः खण्डाः दुर्गस्वीकृतपाठे न सन्ति” । इति ‘वी० के० राजवाडे सम्पादित निरुक्त १५८ पृष्ठे टिप्पणी द्रष्टव्या’ ॥ स० ॥

सृण्येवेति । द्विविधा सृणिः * भवति । भर्त्ता च हन्ता च । तथाश्विनौ चापि भर्तारौ । जर्भरी भर्त्तारावित्यर्थः । तुर्फरीतु ‡ हन्तारौ । नैतोशेव तुर्फरीपर्फरीका । नितोशस्यापत्यं नैतोशम् । नैतोशेव तुर्फरी क्षिप्रहन्तारौ । उदन्यजेव जेमना मदेरू । उदन्यजेवेत्युदकजे इव रत्ने । सामुद्रे चान्द्रमसे वा । जेमने जयमने । जेमना मदेरू । ता मे जराय्वजरं मरायु । एतज्जरायुजं शरीरं शरदमजीर्णम् । अथैषा सोमस्य ॥ ५ ॥

तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ।

ऋ० ९ । ५८ । १ ॥

तरति स पापं सर्वं मन्दी यः स्तौति । धावति गच्छत्यूर्ध्वां गतिम् । धारा सुतस्यान्धसः । धारयाभिषुतस्य सोमस्य मन्त्रपूतस्य वाचा स्तुतस्य । अथैषा यज्ञस्य ॥ ६ ॥

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥

ऋ० ४ । ५८ । ३ ॥

चत्वारि शृङ्गेति वेदा वा एत उक्ताः । त्रयोऽस्य पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये । सप्त हस्तासः सप्त

---

* ऋग्वेदादिभाष्यभूमिका के उपासनाविषय में "अृणि" और "सृणि" शब्दों की व्याख्या करते हुए ऋषिवर दयानन्द ने लिखा है:—
"सृणि=दात्री की तरह से परमात्मा भरण भी करता है और सब क्लेशों का हनन भी करता है" ॥

‡ तुर्फरीतू । इति पाठान्तरं शुद्धम् ॥ सं० ॥

छन्दांसि। त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः। वृषभो रोरवीति। रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिः। यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति। महो देव इति। एष हि महान्देवो यद्यज्ञः। मर्त्याँ आविवेशेति। एष हि मनुष्यानाविशति यजनाय। तस्योत्तरा भूयसे निर्वचनाय ॥ ७ ॥

स्वर्यन्तो + नापेक्षन्त आ द्यां रोहन्ति रोदसी।
यज्ञं ये विश्वतोधारं सुविद्वांसो वितेनिरे ॥

अथ० ४। १४। ४ ॥ ×

स्वर्गच्छन्त ईजाना वा नेक्षन्ते। तेऽमुमेव लोकं गतवन्तमीक्षन्तमिति *। आ द्यां रोहन्ति रोदसी। यज्ञं ये विश्वतोधारं सर्वतोधारं सुविद्वांसो वितेनिर इति।

अथैषा वाचः प्रवह्लितेव ॥ ८ ॥

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

ऋ० १। १६४। ४५ ॥

चत्वारि वाचः परिमितानि पदानि। तानि विदुर्ब्राह्मणा ये मेधाविनः। गुहायां त्राणि निहितानि नार्थं वेदयन्ते। गुहा गूहतेः। तुरीयं त्वरतेः। कतमानि तानि चत्वारि पदानि। ओंकारो

+ स्व१र्यन्तो। इति पाठोऽथर्वसंहितायाम् ॥

× (यजु० १७। ६८) (मै० सं० २। १०। ६)। (काठक सं० १८। ४। २१। ६) ॥

* गतवन्तः ईक्षन्ते इति। इति पाठान्तरम् ॥ सं० ॥

महाव्याहृतयश्चेत्यार्षम्। नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः। मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः। ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः। सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके। पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादाः। अथापि ब्राह्मणं भवति।

"सा वै वाक्सृष्टा चतुर्धा व्यभवत्। एष्वेव लोकेषु त्रीणि। पशुषु तुरीयम्। या पृथिव्यां साग्नौ सा रथन्तरे। याऽन्तरिक्षे सा वायौ सा वामदेव्ये। या दिवि सादित्ये सा बृहति सा स्तनयित्नौ। अथ पशुषु। ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः *। तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्" (मै० सं० १। ११। ५।) इति।

अथैषाक्षरस्य ‡॥ ९॥

ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते॥
ऋ० १। १६४। ३९॥

ऋचो अक्षरे परमे व्यवने यस्मिन्देवा अधिनिषण्णाः सर्वे। यस्तन्न वेद किं स ऋचा करिष्यति? य इत्तद्विदुस्त इमे समासत इति विदुष उपदिशति। कतमत्तदेतदक्षरम्। ओमित्येषा वागिति शाकपूणिः। ऋचश्च ह्यक्षरे परमे व्यवने धीयन्ते। नानादेवतेषु च मन्त्रेषु। "एतद्ध वा + एतदक्षरं यत्सर्वां त्रयीं विद्यां प्रति प्रति (कौषी० ब्रा० ६। १२) इति च ब्राह्मणम्॥ १०॥

* ब्राह्मणे न्यदधुः॥ इति पाठा०॥
‡ अक्षरस्य प्रवह्लितेव। इति पाठा०॥
+ वै॥ इति पाठा०॥ सं०॥

आदित्य इति पुत्रः शाकपूणेः । एषगर्भोभवति । यदेनमर्चन्ति । प्रत्यृचः सर्वाणि भूतानि । तस्य यदन्यन्मन्त्रेभ्य × स्तदक्षरं भवति । रश्मयोऽत्र देवा उच्यन्ते । य एतस्मिन्नधिनिषण्णा इत्यधिदैवतम् । अथाध्यात्मम्:—शरीरमत्र ऋगुच्यते । यदेनेनार्चन्ति । प्रत्यृचः सर्वाणीन्द्रियाणि । तस्य यदविनाशिधर्म्म तदक्षरं भवति । इन्द्रियाण्यत्र देवा उच्यन्ते । यान्यस्मिन्नात्मन्येकं भवन्ति † । इत्यात्मप्रवादाः ॥ ११ ॥

अक्षरं न क्षरति । न क्षीयते वा । अक्षरं :: भवति । वाचोऽक्ष इति वा । अक्षो ॰ यान्यस्याञ्जनात् । तत्प्रकृतीतरद्वर्तनसामान्यात् । इत्ययं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढः । अपि श्रुतितोपि तर्कतः । न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः । प्रकरणश एव तु निर्वक्तव्याः । न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा । पारोवर्य्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति । इत्युक्तं पुरस्तात् ( निरु० १ । १६ ) । मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् । को न ऋषिर्भविष्यतीति ? तेभ्य एतं तर्कमृषिं प्रायच्छन्मन्त्रार्थचिन्ताभ्यूहमभ्यूढम् * । तस्माद्यदेव किञ्चानूचानोऽभ्यूहत्यार्षं ‡ तद्भवति ॥ १२ ॥

---

× मात्रेभ्यः । इति पाठा० ॥ † यान्यस्मिन्नधिनिषण्णानि । इति पाठा० ॥

:: अक्षयं । इति पाठा० ॥ ० अक्षोपादानस्याञ्जनात् इति पाठा० ॥

* मनुष्या. वै०—' अत्रेतिहासमाह—पुरस्तात्कदाचिन्मनुष्या ऋषिषु मन्त्रार्थद्रष्टृषूत्क्रामत्स्वतीतेषु सत्सु देवान् विदुषोऽब्रुवन्नपृच्छन् कोऽस्माकं मध्ये ऋषिर्भविष्यतीति । तेभ्यः सत्यासत्य विज्ञानेन वेदार्थबोधोथ चैतं तर्कमृषिं ते प्रायच्छन् दत्तवन्तोऽयमेव युष्मासु ऋषिर्भविष्यतीत्युत्तरमुक्तवन्त " । इत्येवमस्य विषयस्य सुविशदव्याख्यानं भगवता दयानन्द सरस्वती स्वामिना निजापूर्वे ऋग्वेदादिभाष्यभूमिकेत्याख्ये ग्रन्थे वेदविषयविचारप्रकरणे विहितम् । जिज्ञासुभिः तत्रैव द्रष्टव्यम् ॥

‡ आर्षम्=ऋषिप्रोक्तम् वेदशास्त्राविरोधिना तर्केणानुसंधत्तमित्यर्थः ॥ सं० ॥

हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः ।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥

ऋ० १० । ७१ । ८ ॥

हृदा तष्टेषु मनसां प्रजवेषु यद् ब्राह्मणाः संयजन्ते समानख्याना + ऋत्विजः । अत्र अहत्वं विजहुर्वेद्याभिर्वेदितव्याभिः प्रवृत्तिभिः । ओहब्रह्माण ऊहब्रह्माणः × ऊह एषां ब्रह्मेति वा † । सेयं विद्या श्रुतिमतिबुद्धिः । तस्यास्तपसा पारमीप्सितव्यम् । तदिदमायुरिच्छता न निर्वक्तव्यम् ०। तस्माच्छन्दस्सु शेषा उपेक्षितव्याः । अथागमः । यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवति अनुभवति ॥ १३ ॥

परिशिष्टे प्रथमोऽध्यायः समाप्तः॥

---

इति निरुक्ते त्रयोदशोऽध्यायः ॥ ::

---

+ समानाख्यानाः । इति पाठा० ॥

× ऊहेण तर्केण ब्रह्म विदितं येषां ते ऊहब्रह्माणः ॥

† ऊहस्तर्क एव ब्रह्म महद्वेदार्थसाधनमेषान्ते ऊहब्रह्माणः ॥

० अतपस्विनेतिशेषः ॥

:: त्रयोदशाऽध्यायात्मकमेव निरुक्तमिति केषाञ्चिन्मतम् । परं तदयुक्तम् ॥सं०॥

॥ ओ३म् ॥

# अथ परिशिष्टे द्वितीयोऽध्यायः *॥

[ निरुक्ते चतुर्दशोऽध्यायः ]

व्याख्यातं दैवतं यज्ञाङ्गं च। अथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः।

सूर्य॑ आ॒त्मा ॥ ऋ० १। ११५। १॥

इत्युदितस्य हि कर्मद्रष्टा। अथैतदनुप्रवदन्ति ‡। अथैतं महान्तमात्मानमेषर्ग्गणः प्रवदन्ति +।

इन्द्रं॑ मि॒त्रं वरु॑णम॒ग्निमा॑हुः ॥ ऋ० १। १६४। ४६॥

इति। अथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाच।

'अ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दाः', 'अ॒हम॑स्मि॒ प्रथम॒जाः' इत्येताभ्याम् ॥ १॥

अ॒ग्निर॑स्मि॒ जन्म॑ना जा॒तवे॑दा घृ॒तं मे॒ चक्षु॑र॒मृतं॑ म आ॒सन्।
अ॒र्कस्त्रि॒धातू॒ रज॑सो वि॒मानोऽज॑स्रो घ॒र्मो ह॒विर॑स्मि॒ नाम॑॥
ऋ० ३। २६। ७॥

---

* क्वचित् 'चतुर्दशोऽध्यायः' इति। दुर्गवृत्तौ चतुर्दशोऽध्यायो न वर्तते॥

‡ अनुप्रवदति। इति पाठा०॥ + प्रवदति। इति पाठा०॥ सं०॥

अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाभिः * ।
यो मा ददाति स इदेवमावाः ‡ अहमन्नमन्नमदन्तमाद्मि ॥

तै० ब्रा० २ । ८ । ८ । १ ॥ +

इति । स ह ज्ञात्वा प्रादुर्बभूव । एवं तं × व्याजहारायतमात्मानमभ्यात्मजमन्तिकमन्यस्मा आचचक्ष्वेति ॥ २ ॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्त्ति भुवनेष्वन्तः ॥

ऋ० १ । १६४ । ३१; १० । १७७ । ३ ॥

आवरीवर्ति भुवनेष्वन्तरिति । अथैष महानात्मा सत्वलक्षणः । तत्परम् । तद् ब्रह्म । तत्सत्यम् । तत्सलिलम् । तदव्यक्तम् । तदस्पर्शम् । तदरूपम् । तदरसम् । तदगन्धम् । तदमृतम् । तच्छुक्लम् । तन्निष्ठो भूतात्मा । सैषा भूतप्रकृतिरित्येके । तत्क्षेत्रम् । % तदज्ञानात्क्षेत्रज्ञमनुप्राप्य निरात्मजम् । अथैष महानात्मा त्रिविधो भवति । सत्वं रजस्तम इति । सत्वं तु मध्ये विशुद्धं तिष्ठति । अभितो रजस्तमसी इति । कामद्वेषस्तम ०

* नाम । इति पाठान्तरम् ॥

‡ मावदहमन्नमन्नमदन्तमद्मि । इति पाठान्तरम् ॥

+ तैत्ति० उप० ३ । १० । ६ ॥ साम० पूर्वार्चिक ६ । ३ । १० । ६ ॥

× व्याजहार । यं तमात्मानमध्यात्मजमन्तिकमन्यस्मै आ चचक्ष्व इति । इति पाठा० ॥

% तज्ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकम् । इति पाठान्तरम् ॥

० "रजस्तमसी । रजःकाम इति । द्वेषस्तम इति०", "रजस्तमसी । रजःइति कामद्वेषः । तमः इति०" । इति पाठान्तरे ॥ सं० ॥

इत्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञपृथक्त्वाय कल्पते † प्रतिभाति लिङ्गो महानात्मा तमोलिङ्गो विद्याप्रकाशलिङ्गस्तमोऽपि निश्चयलिङ्ग आकाशः ॥ ३ ॥

आकाशगुणः शब्दः । आकाशाद्वायुर्द्विगुणः स्पर्शेन । वायोर्ज्योतिस्त्रिगुणं रूपेण । ज्योतिष आपश्चतुर्गुणा रसेन । अद्भ्यः पृथिवी पञ्चगुणा गन्धेन । पृथिव्या भूतग्रामस्थावरजङ्गमाः । तदेतदहर्युगसहस्रं जागर्ति । तस्यान्ते सुषुप्स्यन्नङ्गानि प्रत्याहरति । भूतग्रामाः पृथिवीमपियन्ति । पृथिव्यपः । आपो ज्योतिषम् । ज्योतिर्वायुम् । वायुराकाशम् । आकाशो मनः । मनो विद्याम् । विद्या महान्तमात्मानम् । महानात्मा प्रतिभाम् । प्रतिभा प्रकृतिम् । सा स्वपिति । युगसहस्रं रात्रिः । तावेतावहोरात्रावजस्रं परिवर्त्तेते । स कालस्तदेतदहर्भवति ॥

युगसहस्रपर्यन्तमहर्यद् ब्रह्मणो विदुः । *

रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ इति ॥ ४ ॥

तं परिवर्तमानमन्योऽनुप्रवर्त्तते । स्रष्टा द्रष्टा विभक्तातिमात्रोऽहमिति गम्यते । स मिथ्यादर्शनेदं पावकं महाभूतेषु । चिरोएवाकाशाद्वायोः प्राणश्चक्षुश्च ‡ वक्तारं च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्त्तिः । पार्थिवांस्त्वष्टौ गुणान्विद्यात् । त्रीन्मातृतस्त्रीन्पितृतः । अस्थिस्नायुमज्जानः पितृतः । त्वङ्मांसशोणितानि मातृतः । + अन्नपानमित्यष्टौ । सोऽयं पुरुषः सर्वमयः सर्वज्ञानोऽपि कलुमः :०: ॥ ५ ॥

---

† कल्पते । प्रतिभातिलिङ्गः महानात्मा तमोलिङ्गः । विद्याप्रकाशलिङ्गः तमः । अपि निश्चयलिङ्गः आकाशः । इति पाठा० ॥ [ अस्पष्टार्थस्थलमेतत् ]॥

* किञ्चिद् भेदेन मानवे धर्मशास्त्रे ( अ० १ । ७३ ) वर्त्तते, गीतायान्त्वक्षरशः( अ० ८ । १७ ) ॥

‡ वायोः प्राणं चक्षुश्च० । इति पाठा० ॥

+ अन्नं पानमित्यष्टौ । इति पाठा० ॥ :०: कलसः । इति केचित् ॥ सं० ॥

स यद्यनुरुध्यते तद्भवति । यदि धर्ममनुरुध्यते तद् देवो भवति । यदि ज्ञानमनुरुध्यते तदमृतो भवति । यदि काममनुरुध्यते संच्यवते । इमां योनिं सन्दध्यात्। तदिदमत्र मतम्–श्लेष्मा रेतसः सम्भवति । श्लेष्मणो रसः । रसाच्छोणितम् । शोणितान्मांसम् । मांसान्मेदः । मेदसः स्नावा । स्नाव्नोऽस्थीनि । अस्थिभ्यो मज्जा । मज्जातो रेतः । तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवति । शुक्रातिरेके पुमान् भवति । शोणितातिरेके स्त्री भवति । द्वाभ्यां समेन नपुंसको भवति । शुक्रभिन्नेन × यमो भवति । शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत्कथमिदं शरीरं परं संयम्यते । सौम्यो भवति । एकरात्रोषितं कललं भवति । पञ्चरात्राद् बुद्बुदाः । सप्तरात्रात्पेशी । द्विसप्तरात्रादर्बुदः ० । पञ्चविंशतिरात्रः :: स्वस्थितो घनो भवति । मासमात्रात्कठिनो ‡ भवति । द्विमासाभ्यन्तरे शिरः सम्पद्यते । मासत्रयेण ग्रीवाव्यादेशः । मासचतुष्केण त्वग्व्यादेशः । पञ्चमे मासे नखरोमव्यादेशः । षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति । सप्तमे चलनसमर्थो भवति । अष्टमे बुद्ध्याध्यवस्यति । नवमे सर्वाङ्गसम्पूर्णो भवति † ।

---

× शुक्रेण भिन्नेन । इति पाठा० ॥ ० द्विः सप्त । इति पाठा० ॥
:: रात्रस्वस्थितो । इति पाठा० ॥ ‡ 'कठिणो' इत्यपि क्वचित् ॥
† अत्रास्मिन्विषये प्रामाणिकानां ग्रन्थान्तराणामपि मतान्तराणि अध्येतॄणां लाभाय प्रदर्श्यन्तेः—"तत्र प्रथमे मासि कललं जायते ॥ द्वितीये शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां संघातो घनः सञ्जायते; यदि पिण्डः पुमान्, स्त्री चेत् पेशी, नपुंसकं चेदर्बुदमिति ॥ तृतीये हस्तपादशिरसां पञ्चपिडका निर्वर्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति । चतुर्थे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति, गर्भहृदयप्रव्यक्तिभावाच्चेतनाधातुरभिव्यक्तो भवति, कस्मात् ? तत्स्थानत्वात् । तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति, द्विहृदयां च नारीं दौहृदिनीमाचक्षते ॥

मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः ।
नाना योनिसहस्राणि मयोषितानि यानि वै ॥

पञ्चमे मनः प्रतिबुद्धतरं भवति ॥ षष्ठे बुद्धिः ॥ सप्तमे सर्वाङ्ग प्रत्यङ्ग-विभागः प्रव्यक्ततरः ॥(१) सु० शा० स्था० अ० ३ सू० १८ २१; ३५-३७ ॥

(१) "अष्टम नवम मासयोगर्भवृद्धिवर्णनं आयुर्वेदे न दृश्यते । कस्मात्? तदानीं गर्भस्य केवलमङ्गानि प्रत्यङ्गानि च परिपक्वानि भवन्ति, न च खलु परिवर्तनविशेष इत्येतस्मात्" । पाश्चात्यवैद्यकेनाप्यस्य मतस्यैव सम्पुष्टिर्भवति—"From this period up to nine month there is mere increase of size and action."

( Esoteric Anthropology. )

"स तु सर्वगुणवान् गर्भत्वमापन्नः प्रथमे मासि संमूर्च्छितः सर्वधातुकललीकृतः खेटभूतो (२) भवत्यव्यक्तविग्रहः सदसद्भूताङ्गावयवः ॥ द्वितीये मासि घनः सम्पद्यते पिण्डः पेश्यर्बुदं वा । तत्र घनः पुरुषः स्त्री पेशी, अर्बुदं नपुंसकम् ॥ तृतीये मासि सर्वेन्द्रियाणि सर्वाङ्गावयवाश्च यौगपद्येनाभिनिर्वर्तन्ते ॥" च० शा० स्था० अ० ४ सू० ९-११ ॥

(२) 'कलल-सङ्घातप्रत्यम्' इति डल्हणः । 'गृहीतकाठिन्यम्' इतीन्दुः । 'खेटभूतः=श्लेष्मभूतः' इति चक्रपाणिः । तस्माद् युक्तमेवोक्तं पुरस्तादाचार्येण "श्लेष्मा रेतसः सम्भवति" ॥ इति ॥

"अव्यक्तः प्रथमे मासि सप्ताहात् कलली भवेत् ।...सर्वैः सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे ॥" अष्टाङ्गहृदय० शा० स्था० अ० १ सू० ३७,५७ ॥

"प्रथमे मासि सङ्क्लेदभूताधातुविमूर्च्छितः" ॥ याज्ञवल्क्यस्मृति ॥

"ऋतुकाले सम्प्रयोगादेकरात्रोषितं कललं भवति, सप्तरात्रोषितं बुद्बुदं भवति, अर्द्धमासाभ्यन्तरे पिण्डो भवति, मासाभ्यन्तरे कठिनो भवति । ...पञ्चमे पृष्ठवंशो भवति । षष्ठेमासे मुखनासिकाक्षिश्रोत्राणि भवन्ति ।...अष्टमे

आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ।
मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥
अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः ।
साङ्ख्यं योगं समभ्य * स्यन्पुरुषं वा पञ्चविंशकम् ॥

इति । ततश्च दशमे मासे प्रजायते । जातश्च वायुना स्पृष्टस्तन्न ‡ स्मरति जन्ममरणम् + । अन्ते च शुभाशुभं कर्म । एतच्छरीरस्य प्रामाण्यम् ॥ ६ ॥

× अष्टोत्तरं सन्धिशतम् । अष्टाकपालं शिरः सम्पद्यते । षोडश वपावालानि । नव स्नायुशतानि । सप्त शतं पुरुषस्य मर्मणाम् । अर्धचतस्रो रोमाणि कोट्यः । हृदयं ह्यष्टकपालानि । द्वादशकपालानि जिह्वा । वृषणौ ह्यष्टसुपर्णौ ०। तथोपस्थगुदपायु । एतन्मूत्रपुरीषं कस्मात् ? आहारपानसिक्तत्वात् । अनुपचितकर्माणावन्योन्यं जयेते :: इति ।

"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" ।
बृहदारण्यकोपनिषत् ॥ ४ । ४ । २ ॥

मासे सर्वलक्षणसम्पूर्णो भवति । अथ नवमे मासि सर्वलक्षणज्ञानकरणसम्पूर्णो भवति ॥ गर्भोपनिषत् ॥ (३)

(३) अत्रोद्धृतेषु सर्वेषु मतेषु गर्भोपनिषदाऽधिकं सादृश्यमाचार्यमतस्य इति ज्ञेयम् ॥ सं० ॥

* समभ्यस्ये । इति पाठा० ॥
‡ स्पृष्टः न इति पाठा० ॥ + जन्ममरणे । इति पाठा० ॥
× सुश्रुतमतानुसारेण सन्धयस्तु दशोत्तरे द्वेशते इति ॥
० सुवर्णौ इति पाठा० ॥ :: जायेते । इति पाठा० ॥ सं० ॥

महत्यज्ञानतमसि मग्नौ * जरामरणक्षुत्पिपासाशोकक्रोधलोभमोहमदभयमत्सरहर्षविषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभिभूयमानः सोऽस्मादार्ज्जवं जवीभावानां तन्निर्मुच्यते । सोऽस्मापान्नं † महाभूमिकावच्छरीरान्निमेषमात्रैः प्रक्रम्य प्रकृतिरधिपरीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं ‡ फलमनुभूय तस्य संक्षये पुनरिमँल्लोकं प्रतिपद्यते ॥ ७ ॥

अथ ये हिंसामाश्रित्य× विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभिसम्भवन्ति । धूम्राद्रात्रिम् । रात्रेरपक्षीयमाणपक्षम् । अपक्षीयमाणपक्षाद् दक्षिणायनम् । दक्षिणायनात्पितृलोकम् । पितृलोकाच्चन्द्रमसम् । चन्द्रमसो वायुम् । वायोर्वृष्टिम् । वृष्टेरोषधयश्च । एतद्भूत्वा तस्य संक्षये + पुनरेवेमँल्लोकं प्रतिपद्यते :: ॥ ८ ॥

अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभिसम्भवन्ति । अर्चिषोऽहः । अह्न आपूर्यमाणपक्षम् । आपूर्यमाणपक्षादुदगयनम् । उदगयनाद् देवलोकम् । देवलोकादादित्यम् । आदित्याद्वैद्युतम् । वैद्युतान् मानसम् । मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसम्भवन्ति । ते न पुनरावर्त्तन्ते = । शिष्टा दन्दशूका यत इदं न जानन्ति । तस्मादिदं वेदितव्यम् । अथाप्याह ॥ ९ ॥

* मग्नो; मग्नाः । इति पाठान्तरे ॥ † सोऽस्मात्पापात् महा० । इति पाठा० ॥
‡ कर्मणानुरूपम् । इति पाठा० ॥ × अत्र "हिंसा" शब्दः कर्मवाची "हन" हिंसा गत्योः इत्येतस्मात् ॥ सं० ॥
+ पुनः इमं लोकम् । इति पाठा० ॥ :: प्रतिपद्यन्ते । इति शुद्धः पाठः ॥ सं० ॥
= न तेन पुनरा० । इति पाठा० ॥ सं० ॥

न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥

ऋ० १० । ८२ । ७ ॥

न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्यक्षरं ब्रह्मणस्पतिम् । अन्यद्युष्माकमन्तरम् । अन्यदेषामन्तरं बभूवेति । नीहारेण प्रावृतास्तमसा । जल्प्या चासुतृप उक्थशासः * प्राणं सूर्यं यत्पथगामिनश्चरन्ति † । अविद्वांसः क्षेत्रज्ञमनुप्रवदन्ति । अथाहो विद्वांसः । ‡ क्षेत्रज्ञोनुकल्पते । तस्य तपसा सहाप्रमादमेति । अथाप्तव्यो भवति । तेनासन्ततमिच्छेत् । तेन सख्यमिच्छेत् । एष हि सखा श्रेष्ठः सञ्जानाति भूतं भवद्भविष्यदिति । ज्ञाता कस्मात् ? जायतेः ×। सखा कस्मात् ? सख्यतेः । सह भूतेन्द्रियैः शेरते + । महाभूतानि सेन्द्रियाणि प्रज्ञया कर्म कारयतीति ○। तस्य यदापः )( प्रतिष्ठा । शीलमुपशमः । आत्मा ब्रह्म । इति स ब्रह्मभूतो भवति । साक्षिमात्रो व्यवतिष्ठते । अबन्धो ज्ञानकृतः :: ॥

अथात्मनो महतः प्रथमं भूतनामधेयान्युत्क्रमिष्यामः ॥ १० ॥

---

* प्राणं सूर्यं यन्त्यथगा० । इति पाठा० ॥ † 'गामिन्यश्च' । इति पाठा० ॥

‡ क्षेत्रज्ञो न कल्पते । इति पाठा० ॥ × ज्ञायतेः; जानतेः । इति पाठान्तरे ॥

+ खे शेते । इति पाठा० ॥ ○ कारयति इति वा । इति पाठा० ॥

)( यत् तपः; तदा आपः । इति पाठान्तरे ॥

:: बन्धो ज्ञानकृतः । इति पाठा० ॥ सं० ॥

* हंसः । घर्मः । यज्ञः । वेनः । मेधः । कृमिः । भूमिः । विभुः । प्रभुः । शम्भुः । राभुः । वधकर्मा । सोमः । भूतम् । भुवनम् । भविष्यत् । आपः । महत् । व्योम । यशः । महः । स्वर्णीकम् । स्मृतीकम् । स्वृतीकम् । सतीकम् । सतीनम् । गहनम् । गभीरम् । गह्वरम् । कम् । अन्नम् । हविः । सद्म । सदनम् । ऋतम् । योनिः । ऋतस्ययोनिः । सत्यम् । नीरम् । हविः । रयिः । सत् । पूर्णम् । सर्वम् । अक्षितम् । बर्हिः । नाम । सर्पिः । अपः । पवित्रम् । अमृतम् । इन्दुः । हेम । स्वः † । सर्गाः । शम्बरम् । अम्बरम् । वियत् । व्योम । बर्हिः । धन्व । अन्तरिक्षम् । आकाशम् । आपः । पृथिवी । भूः । स्वयम्भूः । अध्वा । पुष्करम् । सगरः । समुद्रः । तपः । तेजः । सिन्धुः । अर्णवः । नाभिः । वृक्षः । ऊर्ध्वः ‡ । तत् । यत् । किम् । ब्रह्म । वरेण्यम् । हंसः । आत्मा । भवति × । वधन्त्यध्वानम् + । यद्वाहिष्या )( । शरीराणि ।

---

* अत्र क्वचित् क्वचित् स्वरविपर्ययो दृश्यते पाठान्तरेषुः—तद्यथाः—मेधः । कृमिः । भूमिः । सोमः । आपः । यशः । महः । स्वर्णीकम् । गह्वरम् । इति । क्वचित् क्रमविपर्ययोऽपि ॥ सं० ॥

† खः । इति पाठान्तरम् ॥ ‡ ऊधः । इति पाठा० ॥

× भवन्ति । इति पाठा० ॥ + वधन्ति । अध्वानम् । इति पाठा० ॥

)( यद्वाहिष्ठ्या । इति पाठा० ॥ सं० ॥

अव्ययं च संस्कुरुते । यज्ञः । आत्मा । भवति । यदेनं * तन्वते ॥

अथैतं महान्तमात्मानमेतानि सूक्तान्येता ऋचोऽनुप्रवदन्ति ॥ ११ ॥

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥
ऋ० ९ । ९६ । ५ ॥

सोमः † पवते । सोमः सूर्यः प्रसवनात् । जनिता मतीनां प्रकाशकर्मणामादित्यरश्मीनाम् । दिवो द्योतनकर्मणामादित्यरश्मीनाम् । पृथिव्याः प्रथनकर्मणादित्यरश्मीनाम् । अग्नेर्गतिकर्मणामादित्यरश्मीनाम् । सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनाम् । इन्द्रस्यैश्वर्यकर्मणामादित्यरश्मीनाम् । विष्णोर्व्याप्तिकर्मणामादित्यरश्मीनाम् । इत्यधिदैवतम् । अथाध्यात्मम्:— सोम आत्माप्येतस्मादेव । इन्द्रियाणां जनितेत्यर्थः । अपि वा सर्वाभिर्विभूतिभिर्विभूतत ‡ आत्मा । इत्यात्मगतिमाचष्टे ॥ १२ ॥

ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणां स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् ॥
ऋ० ९ । ९६ । ६ ॥

---

* यदैनं । इति पाठा० ॥

† सोमः पवते जनयिता मतीनां, जनयिता दिवः, जनयिता पृथिव्याः, जनयिताग्नेः जनयिता सूर्यस्य, जनयितेन्द्रस्य, जनयितोत विष्णोः । इति पाठोऽधिकः चन्द्रमणिसम्पादिते निरुक्तभाष्ये ॥ सं० ॥

‡ 'विभूततमः' इति पाठान्तरम् ॥ सं० ॥

ब्रह्मा देवानामित । एष हि ब्रह्मा भवति देवानां देवनकर्मणामादित्यरश्मीनाम् । पदवीः कवीनामिति । एष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनाम् । ऋषिर्विप्राणामिति । एष हि ऋषिणो भवति विप्राणां व्यापनकर्मणामादित्यरश्मीनाम् । महिषो मृगाणामिति । एष हि महान् भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनाम् । श्येनो गृध्राणामिति । श्येन आदित्यो भवति श्यायतेर्गतिकर्मणः । गृध्र आदित्यो भवति गृध्यतेः स्थानकर्मणः, यत एतस्मिंस्तिष्ठति । स्वधितिर्वनानामिति । एष हि स्वयं कर्माण्यादित्यो धत्ते वनानां वननकर्मणामादित्यरश्मीनाम् । सोमः पवित्रमत्येति रेभन्निति । एष हि पवित्रं रश्मीनामत्येति स्तूयमानः । एष एवैतत्सर्वमक्षरम् । इत्यधिदैवतम् । अथाध्यात्मम्ः—ब्रह्मा देवानामिति । अयमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणाम् । पदवीः कवीनामिति । अयमपि पदं वेत्ति कवीनां कवीयमानानामिन्द्रियाणाम् । ऋषिर्विप्राणामिति । अयमपि ऋषिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणाम् । महिषो मृगाणामिति । अयमपि महान्भवति मृगाणां मार्गणकर्मणामिन्द्रियाणाम् । श्येनो गृध्राणामिति । श्येन आत्मा भवति श्यायतेर्ज्ञानकर्मणः । गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञानकर्मणः, यत एतस्मिंस्तिष्ठन्ति * । स्वधितिर्वनानामिति । अयमपि स्वयं कर्माण्यात्मनि धत्ते वनानां वननकर्मणामिन्द्रियाणाम् । सोमः पवित्रमत्येति रेभन्निति । अयमपि पवित्रमिन्द्रियाण्यत्येति । स्तूयमानोऽयमेवैतत्सर्वमनुभवति † । आत्मगतिमाचष्टे ॥ १३ ॥

---

* तिष्ठति । इति पाठा० ॥

† अनुभवतीति । इति पाठा० । [ अग्रेऽपि एवमेवज्ञेयमिति । सं० ] ॥

तिस्रो वाचं ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥

ऋ० ९ । ९७ । ३४ ॥

वह्निरादित्यो भवति । स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामानि । ऋतस्यादित्यस्य कर्माणि ब्रह्मणो मतानि । एष एवैतत्सर्वमक्षरम् । इत्यधिदैवतम् । अथाध्यात्मम्:—वह्निरात्मा भवति । स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमताम् । ऋतस्यात्मनः कर्माणि ब्रह्मणो मतानि । अयमेवैतत्सर्वमनुभवति । आत्मगतिमाचष्टे ॥ १४ ॥

सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।
सोमः सुतः पूयते अज्यमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥

ऋ० ९ । ९७ । ३५ ॥

एत एव सोमं गावो धेनवो रश्मयो वावश्यमानाः* कामयमाना आदित्यं यन्ति । एवमेव सोमं विप्रा रश्मयो मतिभिः पृच्छमानाः कामयमाना आदित्यं यन्ति । एवमेव सोमः सुतः पूयते अज्यमानः । एतमेवार्काश्च त्रिष्टुभश्च सन्नवन्ते । तत † एतस्मिन्नादित्य एकं भवन्ति । इत्यधिदैवतम् । अथाध्यात्मम्:—एत एव सोमं गावो धेनव इन्द्रियाणि वावश्यमानानि कामयमानान्यात्मानं यन्ति । एवमेव सोमं विप्रा इन्द्रियाणि मतिभिः पृच्छमानानि कामयमानान्यात्मानं यन्ति । एवमेव सोमः

* वावाश्यमानाः । इति पाठा० ॥ † ते एतस्मिन्० । इति पाठा० ॥सं०॥

सुतः पूयते अज्यमानः । इममेवात्मा च सप्त ऋषयश्च सन्नवन्ते । तान्येतस्मिन्नात्मन्येकं‡ भवन्ति । इत्यात्मगतिमाचष्टे ॥ १५ ॥

अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य राजा ।
वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥

ऋ० ९ । ९७ । ४० ॥

अत्यक्रमीत्समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन्प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः । इत्यधिदैवतम् । अथाध्यात्मम्:—अत्यक्रमीत्समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन्प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो× वावृधे सुवान इन्दुः । इत्यात्मगतिमाचष्टे ॥ १६ ॥

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥

ऋ० ९ । ९७ । ४१ ॥

महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत । देवानाधिपत्यमदधादिन्द्रे + पवमानः । ओजोऽजनयत्सूर्ये ज्योतिरिन्दुरादित्यः । इन्दुरात्मा ॥ १७ ॥

‡ तानि इमानि एतस्मिन् एकं । इति पाठा० ॥

× महत्सोमो । इति पाठा० ॥

+ देवानामाधिपत्यम्० । इति पाठान्तरेषु ॥ सं० ॥

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाऽद्या ममार स ह्यः समान ॥

ऋ० १० । ५५ । ५ ॥

विधुं विधमनशीलम् । दद्राणं दमनशीलम् * । युवानं चन्द्रमसं पलित आदित्यो गिरति । सद्यो म्रियते स दिवा समुदिता । इत्यधिदैवतम् । अथाध्यात्मम्:—विधुं विधमनशीलम् । दद्राणं दमनशीलम् * । युवानं महान्तं पलित आत्मा गिरति । रात्रौ म्रियते रात्रिः समुदिता । इत्यात्मगतिमाचष्टे ॥ १८ ॥

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजन्ते विकृतानि रूपशः ॥

ऋ० १ । १६४ । १५ ॥

सहजातानां षण्णामृषीणामादित्यः सप्तमः । † तेषामिष्टानि वा कान्तानि वा क्रातानि वा गतानि वा मतानि वा नतानि वाद्भिः सह सम्मोदन्ते । यत्रैतानि सप्तऋषीणानि ज्योतींषि तेभ्यः पर आदित्यः । तान्येतस्मिन्नेकं भवन्ति । इत्यधिदैवतम् । अथाध्यात्मम्:—सहजातानां षण्णामिन्द्रियाणामात्मा सप्तमः । † तेषामिष्टानि वा कान्तानि वा क्रान्तानि वा गतानि वा मतानि वा नतानि वान्नेन सह सम्मोदन्ते । यत्रेमानि सप्तऋषीणानीन्द्रि-

---

* द्रमनशीलं । इति पाठा० ॥

† पुरस्ताद् ( निरु० १० । २६ ) पठित पाठस्य पुनरुक्तिः किमर्थमत्र कृतेति चिन्तनीयम् ॥ सं० ॥

याण्येभ्यः पर आत्मा । * तान्येतस्मिन्नेकं भवन्तीत्यात्मगतिमाचष्टे ॥ १९ ॥

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥

ऋ० १ । १६४ । १६ ॥

स्त्रिय एवेति † ताः शब्दस्पर्शरूपरसगन्धहारिण्यः । ता अमुं पुंशब्दे ‡ निराहारः प्राण इति पश्यन्कश्चान्न विजानात्यन्धः । कविर्यः पुत्रः स इमा जानाति । यः स इमा जानाति स पितुष्पितासत् × । इत्यात्मगतिमाचष्टे ॥ २० ॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदिशा विधर्मणि ।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवन्ति विश्वतः ॥

ऋ० १ । १६४ । ३६ ॥

सप्तैतानादित्यरश्मीनयमादित्यो गिरति मध्यस्थानोर्ध्वशब्दः । यत + एतस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति । परिभुवः परि भवन्ति सर्वाणि कर्माणि वर्षकर्मणेत्यधिदैवतम् । अथाध्यात्म्ः—सप्तेमानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्ध्व-

---

* तानि अस्मिन् । इति पाठा० ॥

† "एव एताः"०; एवैति ताः० । इति पाठान्तरे ॥

‡ पुंशब्देन । इति पाठा० ॥ × 'भवत्यात्म०' । इति पाठा० ॥

+ "यान्यस्मिन् तिष्ठन्ति तानि०" । इति पाठा० ॥ सं० ॥

शब्दः । यान्यस्मिंस्तिष्ठति * तानि धीतिभिश्च मनसा च विपर्य-यन्ति । परिभुवः † परिभवन्ति सर्वाणीन्द्रियाणि ‡ ज्ञानकर्मणो-स्यात्मगतिमाचष्टे ॥ २१ ॥

न वि जानामि यदि वेदमस्मि निण्यः× सन्नद्धो मनसा चरामि ।

ऋ० १ । १६४ । ३७ ॥ +

न हि विजानान्बुद्धिमतः ○ पुत्रः परिवेदयन्ते )( । अयमादित्यः । अयमात्मा ॥ २२ ॥

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः ।
ता शश्वन्ता विषूचीना वियन्ता न्यश्न्यं चिक्युर्न नि चिक्युरन्यम् ॥

ऋ० १ । १६४ । ३८ ॥

अपाञ्चयति प्राञ्चयति स्वधया :-: गृभीतोऽमर्त्य आदित्यो

---

* 'तिष्ठन्ति' । इति पाठा० ॥

† परिभूणि । इति पाठा० ॥ ‡ कर्मोणि । इति पाठा० ॥

× (निण्यः) अन्तर्हितः । निण्य इति निर्णीतान्तर्हितनाम० । निघ० ३ । २५ ॥

+ इतोऽग्रे "यदा मागन् प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः" ॥ ऋ० १ । १६४ । ३७ ॥ इति द्वितीयोऽर्धः तथा 'न विजानामि यदि वा इदमस्मि । निण्यः सन्नद्धः मनसा चरामि" इत्यपि पाठान्तरे पठ्यते । महाराष्ट्र पाठे तु नास्ति ॥ सं० ॥

○ न हि जानन् पुष्टिः पुत्र० । इति पाठा० ॥

)( परिवेदयते । इति पाठान्तरमेकस्मिन्पुस्तके ।

:-: स्वधेत्युदकनाम (निघ० १ । १२) स्वधेत्यन्ननाम (निघ० २ । ७) ॥ सं० ॥

मर्त्येन चन्द्रमसा सह। तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा। पश्यत्यादित्यं * न चन्द्रमसम् । इत्यधिदैवतम् । अथाध्यात्मम्:—अपाञ्चयति प्राञ्चयति स्वधया गृभीतोऽमर्त्य आत्मा मर्त्येन मनसा सह। तौ शश्वद्गामिनौ विश्वगामिनौ बहुगामिनौ वा। पश्यत्यात्मानं न मनः । इत्यात्मगतिमाचष्टे ॥ २३॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥

ऋ० १० । १२० । १ ॥

तद्भवति भूतेषु भुवनेषु ज्येष्ठमादित्यं यतो जज्ञ उग्रस्त्वेषनृम्णो दीप्तिनृम्णः । सद्यो जज्ञानो निरिणाति शत्रूनिति । रिणातिः † प्रीतिकर्मा दीप्तिकर्मा वा । अनुमदन्ति यं विश्व ऊमाः । इत्यधिदैवतम् । अथाध्यात्मम्:—तद्भवति भूतेषु भुवनेषु ज्येष्ठमव्यक्तं यतो जायत उग्रस्त्वेषनृम्णो ज्ञाननृम्णः । सद्यो जज्ञानो निरिणाति शत्रूनिति। रिणाति † प्रीतिकर्मा दीप्तिकर्मा वा। अनुमदन्ति यं सर्वे ऊमाः । इत्यात्मगतिमाचष्टे ॥ २४ ॥

को अद्य युंक्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥

ऋ० १ । ८४ । १६ ॥

क आदित्यो धुरि गा युंक्ते रश्मीन्कर्मवतो भानुमतो दुरा-

* आदित्यं चन्द्र० । इति पठ्यते क्वचित् । तत्वयुक्तमेव ॥

† निरिणातिः । इति पाठा० ॥ सं० ॥

धर्षानसून्यसुनवन्तीषूनिषुणवन्ति मयोभूनि ‡ सुखभूनि । य इमं सम्भृतं वेद कथं स जीवति । इत्यधिदैवतम् । अथाध्यात्मम्:— क आत्मा धुरि गा युङ्क्त इन्द्रियाणि कर्मवतो भानुमतो × दुराधर्षानसून्यसुनवन्तीषूनिषुणवन्ती मयोभूनि ‡ सुखभूनि । य इमं सम्भृतं + वेद चिरं जीवति । इत्यात्मगतिमाचष्टे ॥ २५ ॥

क ईषते तुज्यते को बिभाय को मंसते सन्तमिन्द्रं को अन्ति ।
कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३ को जनाय ॥
ऋ० १ । ८४ । १७ ॥

क एव गच्छति । को ददाति । को बिभेति । को मंसते सन्तमिन्द्रम् । कस्तोकायापत्याय महते च नो रणाय रमणीयाय दर्शनीयाय ॥ २६ ॥ †

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः ।
कस्मै देवा आवहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥
ऋ० १ । ८४ । १८ ॥

---

‡ असून् असुन्वन्ति । इति पाठा० ॥ × कर्मवन्ति भानुमन्ति । इति पाठा० ॥
+ यः इमानि सम्भृतानि वेद चिरं सः० । इति पाठा० ॥
† श्रीमद्दयानन्द सरस्वती स्वामिनाऽस्य मन्त्रस्य यदन्वयः स्वकीये भाष्ये कृतः तदपि विशेषार्थप्रकाशार्थमत्र विलिख्यते ।

"अथ प्रश्नोत्तरै राजधर्ममुपदिश्यते :—

हे सेनापते ! सेनास्थ भृत्यानां मध्ये कः शत्रूनीषते कः शत्रुभिस्तुज्यते को युद्धे बिभाय कः सन्तमिन्द्रं मंसते कस्तोकायन्ति वर्तते क इभाय शिक्षते उतापि को राये प्रवर्त्तेत कस्तन्वे जनाय चाधिब्रवदिति त्वं ब्रूहि ॥" ऋ० भाष्य १ । ८४ । १७ । भाग २ ॥ सं० ॥

क आदित्यं पूरयति * हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति । कस्मै देवा आवहानाशु होमार्थान् । को मंसते वीतिहोत्रः सुदेवः कल्याणदेवः । इत्यधिदैवतम् । अथाध्यात्मम्:-क आत्मानं पूरयति हविषा च घृतेन च स्रुचा यजाता ऋतुभिर्ध्रुवेभिरिति । कस्मै देवा आवहानाशुहोमार्थान् । को मंसते वीतिहोत्रः सुप्रज्ञः कल्याणप्रज्ञः । इत्यात्मगतिमाचष्टे ॥२७॥

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥

ऋ० १ । ८४ । १९ ॥

त्वमङ्ग प्रशंसीर्देवः † शविष्ठ मर्त्यम् । न त्वदन्योऽस्ति मघवन् पाता वा पालयिता वा जेता वा सुखयिता वा । इन्द्र ब्रवीमि ते वचः स्तुतियुक्तम् ‡ ॥ २८ ॥

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥

ऋ० ४ । ४० । ५ ॥ [ ऐ० ब्रा० ४ । ३ । ५ ] ॥

हंस इति । हंसाः सूर्यरश्मयः । परमात्मा परं ज्योतिः । पृथिवी व्याप्तेति । व्याप्तं सर्वं व्याप्तं वननकर्मणानभ्यासेनादित्यमण्डलेनेति । त्ययतीति लोको त्ययतीति । हंसयन्त्ययतीति । हंसा परमहंसाः । परमात्मा सूर्यरश्मिभिः प्रभूत गभीर वस-

* पूजयति । इति पाठा० ॥ † प्रशंसीत् देवः । इति पाठा० ॥

‡ स्तुति संयुक्तम् । इति पाठा० ॥ सं० ॥

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥

ऋ० १० । १६१ । ४ ॥

शतं जीव शरदो वर्धमान इत्यपि निगमो भवति । शतमिति शतं दीर्घमायुः । मरुत एना * वर्धयन्ति । शतमेनमेव शतात्मानं भवति । शतमनन्तं भवति । शतमैश्वर्यं भवति । शतमिति शतं दीर्घमायुः ॥ ३६ ॥

मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् ।
विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥

ऋ० १ । ८४ । २० ॥

मा च ते धामानि † मा च ते कदा च नः सरिषुः । सर्वाणि प्रज्ञानान्युपमानाय ‡ मनुष्यहितः । अयमादित्योऽयमात्मा । अथैतदनुप्रवदन्ति × । अथैतं महान्तमात्मानमेषर्ग्गणः + प्रवदति वैश्वकर्मणे ।

देवानां नु वयं जाना ॥ ऋ० १० । ७२ । १ ॥
नासदासीन्नो सदासीत्तदानीम् ॥ ऋ० १० । १२९ । १ ॥

---

* माम् । इति पाठा० ॥ † धनानि । इति पाठान्तरम् ॥
‡ उपनामय । इति पाठा० ॥ × प्रवदति । इति पाठान्तरम्
+ एषर्गणः । इत्यपपाठः राजवाडेसम्पादितनिरुक्ते ॥ सं० ॥

च । सैषाऽऽत्मजिज्ञासा । सैषा सर्वभूतजिज्ञासा । ब्रह्मणः सारिष्टं सरूपतां सलोकतां गमयति । य एवं वेद* [ य एवं वेद ]॥ ३७ ॥

इति परिशिष्टे द्वितीयोऽध्यायः ॥

समाप्तं चेदं परिशिष्टम् ॥

——: * :——

इति निरुक्ते चतुर्दशोऽध्यायः ॥



समाप्तं चेदं निरुक्तम् ॥




दा
भवो

...ग्रे "नमो ब्रह्मणे । नमो महते भूताय । नमः पारस्कराय । नमः

* आस्थ... । ब्रह्मशुक्रमसीय । ब्रह्मशुक्रमसीय ॥ इति केचित् पठन्ति ॥

† दुरिता...यम् ॥ सं० ॥

‡ एषामितरे

॥ समाप्तं च निरुक्तटिप्पणम् ॥